अपुरस्तात्स्तोभानि च बहिर्निधनानि च[1]।
पुरस्तात्स्तोभानि च पदनिधनानि।
[अथोभयतो बार्हतानि च।][2]
अथोभयतो राथन्तराणि चोभयतो बार्हतानि[8]।[9]
5 अपुरस्तात्स्तोभानि पदनिधनानि गुरुगीतीनि[10]।
पुरस्तात्स्तोभानि बहिर्निधनानि लघुगीतीनीति[12]।
गीत्यैतानि विजिज्ञासेतेति[13] शाण्डिल्यायनः।
यानि लघुगीतीनि तानि राथन्तराणि।
यानि गुरुगीतीनि तानि बार्हतानि।
10 अपि वा यानि प्रण्यस्तगीतीनि तानि राथन्तराणि।
यान्युदात्तगीतीनि तानि बार्हतानीति।
कल्पेनैव यज्ञकामा व्याख्याताः।
यथैतत् स्वर्गकामयज्ञः पशुकामयज्ञः प्रजापतिकामयज्ञोऽभिचरणीय इति।
अथाप्याहुः—ऊर्ध्वार्थ एव खल्वयं भवति।
15 तं[27] नु खल्वर्थं श्रेम्णोऽन्येऽर्था अन्ववयन्तीति।
आप्तकामाः स्विद् देवाः स्तूयन्ता३ अनाप्तकामा इति।
अनाप्तकामा इति वै खल्वाहुः।
को ह्याप्तकामस्य स्तुत्या कः प्रत्यर्थो भवतीति।
अथाप्याहुः—शश्वदाप्तकामा एव भवन्ति।
20 तत्प्रवादेन जानीमः।
यस्मै देवा कामयन्ते तस्मै समर्धयन्ति।
कुतोऽनाप्तकामाः समर्धयिष्यन्तीति।
अथापीहैवं[39] पश्याम आप्तकामतराणामेवानाप्तकामैरिप्साम्।

---

1 Wanting in B. 2 Want[illegible]ing in B, G1, G2. 3 ०भवतेति G1. 4 [illegible]चोभवतो G1. 5 ०य तानि B. 6 G1, G[illegible]2 add च. 7 Wanting in C. 8 अ is wanting in C. 9 C, G1, G2 add च. 1[illegible]0 ०तानि G1. 11 स्तात् is wanting in G2. 12 गीतीनां G1, G2; C omits इति गीत्यै[illegible] 13 ति is wanting in B, G2. 14 [illegible]०नौ B. 15 तानि wanting in C. 16 नि स[illegible]nting in G1, G2. 17 Wanting in G1, G2. 18 C omits वा. 19 उदात्तगी[illegible] C क. 20 ०न्यनुदात्त० C क. 21 [illegible] C ख, J, K resume from here. बार्हगीतीनि G1, G2 ( see p. 25 note 18 ). 22 [illegible] is wanting in B. 26 अप्याहु० 23 ०काम्या G1, G2, J, K. 24 ०कामो० C. 25 प[illegible]ti[illegible]o B; श्रोमोन्ये० G1, G2; श्रोम्ला-C. 27 तं नु is wanting in C. 28 श्रेयः प्रेम्णोऽन्ये[illegible] J, K; 31 देवा श्रूयन्ता C. 32 न्ये० J, K. 29 ०वयंनीति G1. 30 ०कालमा० J, [illegible]ha[illegible] K. 35 भविलतीनि C; भविष्य-भवाप्त० J, K. 33 सुत्या C. 34 ०त्या० G1, G2, J, [illegible] 38 ०विष्यन्निति C, G1, तीति G1, G2, J, K. 36 ०प्रत्यवा० C. 37 कुतो C 3[illegible]प्त० C, G1, G2, J, K. G2, J, K. 39 ०हैव C, G1, G2, J, K. 40 --

यथैतद्द्राङ्गामिति।
अथाप्यल्पकाम[1]वदायाह—"विश्वेभ्यो देवेभ्यः स्वाहा" इति। VS. 22. 28; 39. 13.
कुतोऽना[2]प्तकामान् प्रति[3]ध्यैभविष्यदिति।
5 अथाप्याहुः—द्विस्थाना देवा भवन्ति।
न्यून[4]मन्यत्स्थानं सम्पू[5]र्ण[6]मन्यत्।
यदु ह न्यूनं तदिह[7] प्र[8]त्नैः प्रतिविभवन्ति।
यदु सम्पूर्णं तत[9] आशिषः समर्धय[10]न्तीति॥ ३॥
कथं[11] खल्वङ्गकामा इति।
10 विद्यन्त इत्येके।
श्रुतिप्रमाणाः।
अङ्गे श्रूयमाणं[12] कथं क्रतौ प्रतीया[13]मेति।
अथापि योऽङ्गकामं क्र[14]तुकामं म[15]न्येतापि नूनं[16]ः सोऽङ्गे दुष्टे सर्वमेवापि क्रतुं दुष्टं मन्येत।
15 अथा[17]पि पृष्ठहोमः सर्वेषां स्तोत्राणां मन्येतेति[18]।
क्रतुकाम इत्यपरम्।
क्रतुः खल्वधिकृतोऽङ्गैश्च कामैश्च भवति।
अथापि न आर्षेय[19]कल्पो दर्शयति—यज्जातीया प्रतिपद् भवति तज्जातीयानि द्रव्याणि कल्पयति।
20 यथा[20] ज्योगामयाविनो[21] वर्षकामस्य जन्[22]या गा विवित्से[23]मानस्येति[24]।
अथापि योऽङ्गे[25] कामं मन्येतापि नूनंः स तदेवाङ्गं कृत्वा विरमेत्, त[26]स्मिन् हि[26] सकामो भवतीति।
यद्धेतदङ्ग[27]दोषात् क्रतुदोष इति, विषये खलु दोषो भवति न तथाकामः।
यद्धेतत्पृष्ठहोमः सर्वेषां[28] स्तोत्राणां मन्येतेति, भवन्ति ह्यङ्गधर्मा यथा
25 युग्य[29]स्य घास[30]दानमक्षस्योपाञ्जनमिति।

1 ०कामपदाय B. 2 ०नाप्त० G1, J, K 3 प्रतिभवि० C, J, K 4 ०न B. 5 म is wanting in J. 6 पूर्वम० B. 7 ०दितः C, G1, G2, J, K. 8 प्रयत्नैः B. 9 ततश्चाशिषः C. 10 ०र्धतीति J. 11 कथमु C, G1, G2, K, अथमु J. 12 ०माणं C. 13 प्रतियामेन G1, G2, J, K. 14 क्रतुं कामयेता० C. 15 म wanting in G1, J. 16 मन्येसो० G1, G2; मन्यःसो० J, K. 17 अथोपि J. 18 मन्यन्त इति B. 19 ०काल्पो G1, G2, ०षेंकाल्पो J. 20 यथो G1, J. 21 ०ने G1, G2, J, K. 22 जन्यामाविधित्समान० C. 23 विवत्स० B, विविमान० G1. 24 ०स्य० K. 25 योग का० G1, G2, J, K 26 तन्हिस्मि G1, G2, J. 27 ०दनंदो० J, K. 28 ०ति B. 29 ०ग्म० K. 30 चासा० B; दान्वासदाममक्षसो० G1.

सम्भूय तु खल्वर्थान् सा[1]धयन्तीति ।
कथमु ब्रह्मसाम्नि कामागानमिति ।
याथाकामी कामानामित्येक आहुः ।
अनादेशे किमन्यद् याथाकाम्यात् प्रतीयाम[2]ः ।
5 अथापि रहस्यब्राह्मणं[3] दर्शयति—याथाका[4]मीति याथाकामानामिति ।
क्रतुकाम इत्यपरम् ।
एषोऽधिकृतः ।
अथापि यः क्रतुकामेऽधिकृते सत्यं[5]न्यं काममुत्पादयेदपि नूनं स पशुना तृतीयसवने चर[6]न्तीत्यन्यं पशुमुत्पादयेत् ।
10 ओ[7]मिति सति समया[8]दपेयात् ।
यद्यु[9]पैतमेव प्रतीया[10]द्यः प्रा[11]तःसवने सं[12]दृशं व्याहन्यात् ।
यद्वे[13]तदनादेश इति, आदेशजातिरेषा भवति ये[14]दधिकारः ।
यद्वेतद्रहस्यब्राह्मणं[15] दर्शयतीति, सर्वाभिप्राय एतदुपपद्यते ।
कथमु खल्वाशीःसमृद्धिरुपस[16]रणानीति ।
15 सर्वस्तोत्रेष्वित्येक आहुः ।
स्तोत्र[17]शब्देन चा[18]भिश्रावयति ।
अपि चानिर्देशे किमर्थोऽवयवं प्रतीयादिति ।
ब्रह्मसाम्नीत्यपरम् ।
ब्रह्मसाम[19] ह्याशीःस्था[20]नमिति ।
20 अथापि यः स्तोत्रशब्दा[21]न्नोऽस्तोत्रीये प्रतीयादाशीश्शब्दादपि स नाऽब्रह्मसाम्नि प्रत्येतुमर्हतीति ॥ ४ ॥
अथातो यज्ञस्थानानि ।
अपिच सन्धियज्ञा इत्याचक्षते ।
अहोरात्राभीज्याऽग्निहोत्रम् ।

---

1 श्यादय० G1; सादय० G2, J, K. 2 ०म C, G1, G2, J. 3 ०णे C, G1, G2, J, K. 4 याथाकामिन्वर्तिवका० G1, G2, K; याः थामित्वमिवका० J; ०कामी कामा० is suggested here. 5 सत्यं न्यं G1, G2, J, K. 6 चरती० is suggested. 7 एदामि० B. 8 समानादपेयात् G1 G2; समानादयेयात् J. 9 ०युवैत० C, G1, G2, J, K. 10 प्रतियाद्यः J. 11 प्रति० C; प्रतेः० G2, J but a second hand in G2 corrects it. 12 स्व० B. 13 ०द्वेत्वद० G1; ०द्वेवद० J. 14 C adds तद्. 15 ०णे C, G1, G2, J, K. 16 स wanting in K. 17 स्तोत्रे श० B; स्तोत्रब्देन J. 18 च न हि स्रावयति C; च हि श्रावस्रावायति G1, G2; च हि भावयति J, K. 19 ०सामा G1. 20 ०शीर्ष्ठान० C, G1, G2, J, K. 21 ०ना-स्तोत्रे C; ०ना स्तोत्रे G1, G2, J, K.

सायमाहुत्या रात्रिमभियजते[1] ।
सा यत्र क्व च पुरोदयाद्धूयते[2] स्वे स्थाने जुहोमीति विद्यात् ।[3]
प्रातराहुत्याऽहः ।
5 सा यत्र क्व च पुराऽस्तमयाद्धूयते[4] स्वे स्थाने जुहोमीति विद्यात् ।
ते तु यदादौ निदधाति प्राप्तश्च होमकालः ।
अपिचैवं[5] कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्यौ[6] ।
दर्शपूर्णमासौ[7] ।
पौर्णमासेन[8] हविषाऽपरपक्षमभियजते[9] ।
10 स यत्र क्व च पुराऽमावास्यया[10] यजेत स्वे[11] स्थाने यजे[12] इति विद्यात् ।[13]
आमावस्येन पूर्वपक्षम् ।
स यत्र क्व च पुरा पौर्णमास्या यजेत स्वे स्थाने यज इति विद्यात् ।
तौ[14] तु यदादौ निदधाति प्राप्तश्च यज्ञकालः[15] ।
अपिचैवं[16] कृत्स्नौ पक्षावभीष्टौ भवत इति ऋत्वभीज्या[17] ।
15 चातुर्मास्यान्योपधि[18] भर्त्वयभीज्या[19] ।
आग्रयणेष्टी उदगयनदक्षिणायनयोः, पशुसोमः[20], तस्य संवत्सरस्याभीज्या सुत्येति ।
तत्खल्वेतत् सकृत्प्रयुक्तमाहिताग्नेः कुशलेन यदग्निहोत्रं[21][22] दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी पशुसोम[23] इति[24] तु यदेवं न करोति ह्यवयज्यौ[25] स्यादिति ।
20 [ अननुभूतिजरं स्यादिति[26] । ][27]

---

1 ०त्रमभियजते B; ०त्रिमपि य० G1; ०त्रिं यज० J, K. 2 ०ह्रूयेत C, G1, G2; ह्रूयेत J, K. 3 J, K add स यत्र पुरामावास्यया यजत स्वे स्थाने यजत इति विद्यात् ( See line 12 ). 4 ०ह्रूयेत C, G1, J, K. 5 ०चैनं C. 6 C क reads ०भीष्टा for ०भीज्या here and in the following lines. 7 ०पौर्ण० C, G1, G2, J, K. 8 ०सेव G1. 9 ०भिजयते B; ०भियाजता J; ०यजेते K. 10 ०स्या C. 11 स्व G1, G2. 12 यजत C. 13 J, K omit this sûtra and the next two. 14 ते J. 15 होमकालः C क. 16 अपिवैवं C. 17 ऋत्वभीष्टा C; कत्वगभीज्या B. 18 ०र्धि B. 19 कत्वगमीज्या B; पक्ष्यमिज्या G1, G2. 20 पशुस्सोमः B; पशुसमः C क; पशुसमः G1, G2, J, K. 21 यददग्नि० G1, G2, J. 22 ०त्रपूर्ण० B. 23 पशुसोम इति तु is wanting in C क; पशुसोम इति वै सत्रं यदे० C ख; पशू (०शुः० J; ०शु० K) सोम इति वै स तु यदे० G1, G2, K. 24 J adds वै स. 25 ०कावदिभ्या॰ स्या०C; ०कायभ्जु॰ स्या० G1, G2, J, K. 26 स्योदि० J. 27 Wanting in B.

अ[1]सिद्धिदर्शी वा स्यात् ।
मू[2]लिपुरोडाशेनाप्नोति ।
आज्येन पयसा च प्राणि[3]ति ।
अथाप्याहुः—आदित्यश्च वाँ[4]व खलु चन्द्रमा[5]श्चेमानि पर्वाणि कुर्[6]वतो
5 ययोरियमभीज्या भ[7]वतीति ।
अग्निहोत्रे[8]णादित्यस्येज्यामभियजते ।
दर्शपूर्णमासाभ्यां चन्द्रमसः ।
तदग्निहोत्रं सा[9]यमाहुत्या प्रयुज्यते, प्रातराहुत्या निस्तिष्ठते ।
सोऽपि नाहुत्वा प्रातराहुतिमन्यं यज्ञमुपक्रमते ।
10 कथं पूर्वस्मिन्न निति[10]ष्ठतेऽन्यमुपक्रामेतेति[11] ।
पौर्णमासेन हविषा दर्शपूर्णमासौ प्रयुज्येते[12] ।
अ[13]मावास्येन निस्तिष्ठेते[14] ।
सोऽपि नानि[15]ष्ट्वाऽऽमावास्येन हविषाऽन्यं यज्ञमुपक्रमते ।
कथं पूर्वस्मिन्न निति[16]ष्ठतेऽन्यमुपक्रामेतेति[17] ॥ ५ ॥
15 तदप्यपरपक्षे प्रायणं परिजिहीर्षितं भवति । PS. 2.-7. 1.
रात्रौ वा । PS. 2. 7. 2.
यज्ञ[18]विलोपो वि[19]संस्थिते । PS. 2. 7. 3.
अपि च[20] नोह तमस एव तम ई[21]यादिति । cp. PS. 2. 7. 4.
तच्चेदपरपक्षे प्रायणं शङ्केत[22] । PS. 2. 7. 5.
20 यावं[23]स्तोऽपरपक्षस्या[24]तिशि[25]ष्टा रात्रयः स्युस्तासां सायं प्रातराहुतीः प्रति-
सङ्ख्याय हुत्वा[26] प्रत्याहृ[27]त्याऽऽमावास्ये[28]न हविषेष्ट्वा समापयेयुः । ibid.
एवम[29]यज्ञविलोप इति ।[30]
पूर्वपक्षे चेद् रात्रौ प्रातराहुतिमेव । PS. 2. 7. 6.

---

1 सिद्धि० C, G1, G2; सिद्ध० J. 2 मूलः पु० B. 3 प्राणीति C, G1, G2, J; प्रणीति K. 4 वावस्व G1, G2; वांव स्व J, K. 5 ०नाश्चिश्चे० C. 6 कुर्वते G1, G2, J, K. 7 भौति G1, G2, J. 8 ०णाहादि B; ०णाहादि० G1, G2, K; ०णादादि J. 9 After सा both the mss. G1, G2 break off. 10 निष्ठिते० B, C; 11 क्रमेयेतेति B; ०मयेति J, K. 12 ०ज्यते J, K. 13 ममा B. 14 ०ते C, J, K. 15 ०निष्ठा० J. 16 ०न्ननिस्तिष्ठिते० B; ०न्ननिस्तिष्ठते० C; ०न्नमितिष्ठतेनिन्य० J. 17 ०क्रमेयेति B; ०क्रमयेति J, K. 18 ०विलोपो B; ०विनोदो J. 19 वि is wanting in J. 20 चान्यस्त० PS. 21 स्यात् PS. 22 शङ्केत PS. It does not end the sūtra here. 23 ०स्तापर० J. 24 ०क्षाति० PS. 25 ०ष्ट J. 26 ०त्वा J. 27 ०हु० J. 28 ०स्ये J. 29 एवं यज्ञ० C, J. 30 Wanting in PS. Hultzch's ms. of PS. ( ie. H. PS. ) contains it.

पुरस्तादाहवनीयं हरेयुः । PS. 2. 7. 7; cp. LŚ. 8. 8. 16.
पश्चाद् गार्हपत्यम् । PS. 2 7. 8; cp. LŚ. 8. 8. 16.
दक्षिणतो दक्षिणाग्निम् । ibid.
मध्ये शरीरम् । PS. 2. 7. 9.
5 तं दक्षिणाशिरसं[1] चितावाहितं[2] यज्ञपात्रैः कल्पयेत्[3] । PS. 2. 7. 10, 11; LŚ. 8. 8. 17. cp. ŚBr. 12. 5. 2. 7 up to p. 32. 4.
अध्वर्युः[4] शिरसि कपालानि युञ्ज्यात् । PS. 2. 7. 12; LŚ. 8. 8. 18.
समवत्तधानं[5] च चमसम् । PS. 2. 7. 13; cp. LŚ. 8. 8. 19.
ललाटे प्राशित्रहरणम् । PS. 2. 7. 14; LŚ. 8. 8. 20.
10 नासिकयोः स्रुवौ[6] कर्णयोर्वा[7] । PS. 2. 7. 15; cp. LŚ. 8. 8. 21.
आस्ये हिरण्यमवधायाऽनुस्तरणिकया[8][9][10] गोवपया[11] मुखं प्रच्छाद्य तत्राग्निहोत्रहवणीं[12] तिरश्चीम् । PS. 2. 7. 16–18; LŚ. 8. 8. 22.
दक्षिणे पाणौ जुहूम् । PS. 2. 7. 19; LŚ. 8. 8. 23.
सव्य उपभृतम् । PS 2. 7. 20; LŚ. 8 8. 24.
15 पार्श्वयोः स्फ्योपवेषौ[13] ।[14] PS. 2. 7. 21; cp. LŚ. 8. 8. 25.
तथा वृक्यौ[15] यथास्वम्[16] । PS. 2. 7. 22; LŚ. 8. 8. 25.
उरसि ध्रुवाम् । PS. 2. 7. 23; LŚ. 8. 8. 26.
उदरे[17] पात्रीम् । PS. 2. 7. 24; LŚ. 8. 8 27.
उपस्थे कृष्णाजिनम् । PS. 2. 7. 25; LŚ. 8. 8. 28.
20 अन्तरेण[18] सक्थिनी[19] शम्यां[20] दृषदुपले[21] यच्च नादेक्ष्यामः[22] । PS. 2. 7. 26, 27; LŚ. 8. 3. 29.
दक्षिणस्योरुस्य दक्षिणतः[23] उलूखलम् । PS. 2. 7. 28; LŚ. 8. 8. 30.
अनुसक्थं[24] मुसलम् । PS. 2. 7. 29; cp. LŚ. 8. 8. 31.
पादयोः[25] शकटशूर्पे[26] । PS. 2. 7. 30; cp. LŚ. 8. 8. 32.

---

1 PS. breaks the sūtra here. 2 चितायां वाहितं C, J, PS. 3 कल्पयति PS. 4 Wanting in LŚ 5 सनन्त० C; समत्त० J; समोप्तधानं LŚ. 6 स्रुचौ C. 7 कर्णवा J; wanting in LŚ. 8 ०र्ण० J, K. 9 PS. breaks the sūtra at ०धाय. 10 ०णे J. 11 गौमुखं वपया LŚ. 12 ०णि B. 13 स्म्या० J; स्फो० K. 14 Wanting in LŚ. 15 वृक्कौ C; पक्कौ J, पृक्कौ K. 16 यथात्वम् J, wanting in LŚ. 17 उदस्से J; उदरस्थे K. 18 अन्त्रेण J. 19 शच्छीनि J; सक्थो K; सक्थ्नी LŚ. 20 शम्या दृ० C शम्यादृ० J, K, PS. 21 H. PS adds च; PS, H. PS break the sūtra here. 22 नादेष्यामः PS. 23 ०क्षिण B, J. 24 ०क्थं LŚ. 25 J repeats here the portion शम्या दृषदुपले … पादयोः. 26 शंकुशूर्पे K, ०शूर्पौ H. PS; शूर्पम् LŚ.

सर्वाण्युत्तानान्यासेचनवन्ति[1] पृषदाज्येन पूरयित्वा । PS. 2. 7. 31, 32; cp. LŚ. 8. 8. 33.
अथैनं[3] यथास्थानं युगपदग्निभिरुपसृजेत् । cp. PS. 2. 7. 33; LŚ. ibid.
सर्वस्वारिकं[4] परिगाणम्[5] । PS. 2. 7. 34.
5 "स एष यज्ञायुधी यजमानः स्वर्गंलोकमेति" इति[6] ब्राह्मणं भवति[7] । PS. 2. 7. 35; ŚB. 12. 5. 2, 8.
"आहुतिं जुहोति पुत्रो भ्राता यो[8] वान्यो यज्ञियो ब्राह्मणः—
'तस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।'
'असौ स्वर्गाय लोकाय स्वाहा ॥'"[9] इति । PS. 2. 7. 36; ŚB. 12. 5. 2. 15.
10 शान्तिर्वामदेव्यम्" ॥ ६ ॥ PS. 2. 7. 37.

पञ्चमः[11] पटलः

एकंहिङ्कारं[12] बहिष्पवमान१ साम्नश्चैकत्वात् ।
15 छन्दसश्चेत्याचार्याः[13] ।
साम्नामनु नानात्वम्[14] ।
उत्तरयोः पवमानयोः पृथग्घिङ्कारा भवन्ति ।
पर्यायाणामनु नानात्वम्[15] [16] ।
आवर्तिषु[17] सन्धौ विप्रतिपद्यन्ते ।
20 एकहिङ्कार इत्येके ।
यथा बहिष्पवमानं त्रिरात्वार्या हिङ्कुर्वन्ति ।
देवतानामनु नानात्वम् ।
विश्वजितोऽपि[18] वा नानादेवतं बहिष्पवमानम ।
अर्थाप्यत्र[19] सकृद्धिङ्करोति सकृद्धिङ्कृतोत्पादत्वाद् बहिष्पवमानस्येत्याचार्याः ।
25 अथ यज्ञायज्ञीयानुरूपे कथ१ हिङ्कार इति ।
यथोत्तरयोः पवमानयोरित्येके ।
अस्ति हि सामनानात्वम् ।
यथा वा विश्वजिति नानादेवतं[20] इति ।
सकृद्धिङ्करोति सकृद्धिङ्कृतोत्पादत्वाद्[21] [22] बहिष्पवमानस्य, तथा वा स्यादिति ।

1 ०ति न J, K. 2 पृजदा० PS. 3 अथैनान् PS. 4 सर्वास्थानिकं C; ०स्वारिकं J, ०स्वारं H. PS. 5 ०गाणम् C; ०गाण९ J; ०गानम् PS. 6 ति C. 7 ०तीति H. PS. 8 ०यो C. 9 यत्रो J; वा H. PS. 10 तस्मा० C, J, K. 11 C, J, K, PS, H. PS. repeat it 12 In B only. 13 एका J, K. 14 छा० B. 15 नात्व० J. 16 नात्व० B, J. 17 ०र्वाच C क. 18 ०तो वा C. J, K. 19 ना J; wanting in K. 20 अथात्र C, J, K. 21 ०ते सति । C, K. 22 ०त्पादाद B.

अथ योनौ यज्ञं [1]तन्वानस्य कथं[2] [3]रेतस्या[4]रथन्तर[5]वर्णे स्यातामिति ।
उभे यथास्थानꣳ स्यातामिति ।
बहिष्पवमाने चोत्पन्ने भवतः ।
न [6]चापि निवर्तयति ।
5 अथापि यथा गायत्रं [7]यज्ञायज्ञीयधर्मान् [8]प्रतिपद्यते एवमपि यज्ञायज्ञीयं गायत्रधर्मान् प्रतिपद्येत ।
[9]बहिष्पवमान एष धर्मो भवतीत्यपरम् ।
[10]नान्यत्र गायत्रान्न चान्यत्र बहिष्पवमानादिति ॥ ७ ॥
[11]अथ गायत्रस्य काम्याः सामान्ताः ।
10 यावन्निगदꣳ स्युरित्येके ।
[12]स्वरस्यैते प्रत्याम्नाया भवन्ति ।
तत्र किमर्थोऽवयवं प्रतीयादिति ।
[ [13]अथाप्येवमव्याहृतं गायत्रं भवति ।
अथापि [14]यथा काम्यस्याविप्रयोगस्तत्कुशलम् ।
15 अथाप्येष प्रयोगाणां धर्मो येन [15]प्रक्रमैस्तेन समाप्तिरिति ।
बहिष्पवमान इत्यपरम् ।
एतद् गायत्रस्य विकारस्थानम् ।
अथाप्येतद् [16]धुरोꣳ [17]सामान्ता नातियन्ति । ]
अथाप्येवमजामि भवति ।
20 अथाप्येवं यथाभूयिष्ठं भवतीति ।
प्रथमायामिति [18]वार्षगण्यः ।
[19]एतद्बहिष्पवमानस्याशीः[20]स्थानम् ।
अत्र हि काम्याः प्रतिपदो भवन्तीति ।
रथन्तरवर्णायामित्यपरम् ।
25 एषा च विकृततमा ।
अपि च [21]पथ्याप्रक्रमं पथ्यावसानं भविष्यतीति ।
[22]ब्राह्मण आज्य इत्यपरम् ।

1 तत्वानानस्य J, K. 2 कथन्त C, J. 3 रेवर्णे J. 4 °थ° C. 5 °रथर्णे B. 6 चातिनि° B; चापि निवर्त° C, J, K. 7 यज्ञीयं J. 8 पद्यत G1, G2. G1, G2 resume from here. (see p. 30 note 9). 9 C, G1, G2, J add गायत्रस्य. 10 वान्य° C. 11 Wanting in C, G1, J. 12 °स्येने C, G1, G2, J, K. 13 B omits the portion within brackets. 14 यथा° C. 15 प्रक्रमेरन् J, K. 16 धरा° G1. 17 °माना J, K. 18 वार्ष° G1. 19 एतत्पद° B. 20 °शीर्दानम् C, G1, G2, J, K. 21 पथ्य° G1. 22 ब्रा° K.

ब्रह्मसाम ह्याशी[1]ःस्था[2]नमिति ।
उत्तरयोः पवमानयोरित्यपरम् ।
एतद्वे[3]तेषाꣳ सामा[4]न्तानाꣳ स्थानम् ।
अथाप्येवꣳ रोहो भवति
5 अपि चान्ताख्यानि कर्माणीति ।
यद्वेतज्जामीत्यजामि वा कल्पयेत, अर्थो[5]ऽजामिकरण इति वापि तितिक्षेत ।
अनृ[6]च्येके गायत्रं गायन्ति ।
कस्य हेतोरिति[7] ।
स्वरायैतत् स्थानं कुर्वते ।
10 स न इत्थं केवलः स्वरो गीतो भविष्य[8]तीति ।
ते[9] व्याध्मत्यृचि प्रस्तुत्यानृचि गाय[10]न्ति ।
प्रतिहारस्य चानुत्सादमनुपायां[11]श्च निधनस्य चानिधनस्वरिते[12]त्वान्निधन-
मुं[13]त्सीदेदित्याचार्याः ॥ ८ ॥
अथ बृहद्रथन्तरयोर्वदति ।
15 तयोः समा[14]नं निधनमासीत् ।
तस्मिन्नातिष्ठेतामिति ।
किन्नि[15]धनमिति ।
अ[16]हरिति कौत्सः ।
अकारमेवान्ये[17]त् ।
20 सकारोपसृष्टं मेजे[18] ।
हकारमे[19]न्यत् ।
सकारोपसृष्टं सकारमेव, अहमनयोः समानं निधनं मन्य इति धानञ्जय्यः ।
स हुं[20]भयत्र दृश्यत इति ।
निधनब्राह्मणमेवाहमिदं मन्य इति वार्षगण्यः ।
25 द्वे खल्विमे पृष्ठे भवतः ।
एकं पृष्ठस्थानं तस्मिन्न स्पर्धे[21]तामहंपूर्व[22]तया इति ।

1 त्याशी॰ J. 2 ॰शीर्द्धा॰ C, G1, G2, J, K. 3 ॰देवेषा॰ K. 4 सामन्ता॰ G1, G2. 5 आमिकरण J; अर्थ्यो॰ K. 6 ॰नृचोके J. 7 इति is wanting in B. 8 ॰ष्यभीति G1, G2; ॰ष्यसीति J, K. 9 व्या घ नृचि B; तथा प्रक्षविम॰ C; ते व्याघ्वत्यृचं प्रस्तुत्यानृचि G1, G2; 10 गायन्तः C, G1, G2, J, K. 11 ॰याश्च K. 12 ॰स्वरत्वान्नि॰ B; ॰नं स्वरित्वानि॰ C; ॰स्वरित्वान्नि॰ G1, G2; ॰न ''' स्वान् J. 13 ॰मुसीचदेदि॰ G1. 14 सामन् B. 15 ॰धा॰ B. 16 इ॰ C ख, G1, G2, J; आइ॰ K. 17 ॰न्ये C, G1, G2, J, K. 18 C, J omit मेजे ''' सकारोपसृष्टं. 19 ॰मभ्यास॰ G1, G2. 20 फभ॰ G1. 21 ॰र्द्वेयथामहं॰ G1, K; ॰र्द्वेथामहं॰ G2; ॰र्द्वेयथमहं॰ J. 22 ॰ताया G1, G2, J, K.

अथैतेषु पुरस्ताज्जपेषु वेति ।
एतदुदस्ये[1]दित्येक आहुः ।
एतानि मनसान्वीक्ष्योद्गायेदिति हि भवतीति ।
अन्यदिदं तेभ्यो भवतीति ।
5 यथाधीतमित्याचार्याः ।
न चोदासो विज्ञायते ।
अपि चार्थस्यादूपकम् ।
अथापि संशयेऽलोपो लोपान्[2]न्यायतर इति ।
ते[3] कथं पवमानगतयोरिति ।
10 कर्तव्या इत्येके[4] ।
सामसंयुक्ता हि[5] भवन्ति[6] ।
अकर्तव्या इत्यपरम्[7] ।
स्थानसंयुक्ता हि भवन्ति ।
अथापि पवमानसा[8]मनी अ[9]प्रधानभूते भवत इति ।
15 अथापि यद्युहैनान् पुरस्तात् स्तोत्रा[10]दकरिष्यद् व्य[11]पेता अन्यैः साम[12]भिरभ-
विष्यन्, यद्[13]नन्तरान् स्तोत्रव्यपा[14]योऽभवि[15]ष्यत् ।
एतेन वामदे[16]व्ययज्ञायज्ञीये व्याख्याते ।
बृहतः स्तोत्रोत्तमायां ब्राह्मणोक्तानां रोहाणामुत्तमं न रुह्यात्[17] इत्याचार्याः ।
Ārṣ: K. V. 18. b; 19 a; 70 a.
20 अप्रथमा[18]यैवं ह्याह—बृहतो रोहा वृणीमहा मार्दा[19]यिषु वान्तौ पूर्वौ वृ[20]द्धौ
निधनोपाये च द्वितीयमक्षरं वर्धयेत् स तृतीयः ।
तदुपरिष्टात् स्तोत्रस्य प्रत्य[21]वरोहे देवं हि स युवान[22]मृत्विजमनूचानं प्रेत-
माहुः—ऐ[23]नमप्रत्य[24]वरूढं परावधीदिति ॥ ९ ॥
अथ यज्ञायज्ञीय[25]स्योत्तरयोर्द्व्यक्षरेण प्रस्तौति ।

---

1 ०स्मेदि G1, G2, J, K. 2 लोपान्याय० G1, G2; लोपान्याम्य० K 3 Wanting in G1, G2, J, K. 4 ०त्ये G1, G2. 5 Wanting in J, K. 6 ०ति J. 7 म् is wanting in J, K. 8 ०साम्नी B. 9 अ is wanting in C 10 स्तोद्रथवत्रा० J, K. 11 व्यनेता G1, G2, J, K. 12 ०भे० J. 13 यद् द्रथन० C; यद्रथतंतरां G1, J यद्रथनतरां G1, G2, J, K. 14 ०व्यवायो० C, G1, G2, J, K 15 ०यो न भवि० G1, G2. 16 ०देव्या० G1, वामदेतेनवामदे J. 17 रोहेद C, G1, G2, J, K. 18 अप्रमाधायै० B; अप्रमाधायै० G1, G2, J. 19 ०मादा इषु वन्तौ B, मदाविषु० C, मदयिषु J. 20 वृ is wanting in G1. 21 वात्येव० G1, वाव० G2, मावराहे J. 22 ०नमस्तृ B, 23 C, G1, G2, J add बृहद्. 24 स्त is wanting in J. 25 ०ज्ञीयोत्त० B; ०ज्ञीयोस्तोत्त० G1, G2, J.

यथा बृहद्रथन्तरयोः ।

तदपि शश्वद्ब्राह्मणं भवति—

तानि ह वैतानि द्वादशाक्षर[1]प्रस्तावानि ककुबुत्तराणि सामानि बृहद्रथन्तरे यज्ञायज्ञीयञ्चेति ।

5 अथ खल्वाह—"यदग्निष्टोमयाज्यनृतमाह, तदन्वस्य यज्ञः स्रवति, अक्षरेणान्ततः प्रतिष्ठाप्स्ये[2]म्" इति । PB. 8. 6. 13.

किमनृतं किमक्षर[3]मिति ।

वेत्येतदक्षरम् ।

वकारादिराकारो गकारान्त इत्येक आहुः ।

10 तस्य गकारलोपं ब्राह्मणं क्षिपे[4]तीति तदर्पितमुपेयु[5]ः ।

एवं कृत्स्नेन "अक्षरेण यज्ञस्य छिद्रमपि दधाति" इति । PB. 8. 6. 13.

आर्चिकमेवैतदक्षरमित्यपरम् ।

एतस्मिन् ह्यक्षरशब्दात् प्रतियन्ति ।

15 अष्टाक्षरे[6]ण प्रथमाया ऋचः प्रस्तौति ।

द्व्य[8]क्षरेणोत्तरयोश्चतुरक्षरेण बृहतः प्रतिहरतीति ।

न स्तौभिकैः सहोपपद्यते ।

तस्माद्यदे[9]वान्त्यमक्षरं तन्निधनमुपेयुः ।

यथाधीतमित्याचार्याः ।

20 स्वरतन्त्राण्यक्षराणि भवन्ति, स्वरान्ततामेवाक्षरस्यै[10]प्सद् ब्राह्मणमेवमवर्क्ष्ये[11]दिति ।

अथापि बहुलैषा छान्दसी[12] वृत्तिः ।

[13]यौङ्गिधनानीति चैतान्याचक्षते, वागुप[14]यानीति च ।

यद्धेतदार्चिकमक्षरमिति, यथाधिकारमेतद् भवति, स्तौभिकस्य[15]ेहाधिकारो
25 विज्ञायते ।

[16]अथापि संशये प्रकृतिसविधमेव प्रत्येतव्यमिति प्रत्येतव्यमिति ॥ १० ॥

षष्ठः[17] पटलः

---

1 ॰रा प्र॰ G1. 2 प्य is wanting in J, K. 3 ॰रा॰ G1, G2. 4 श्रीयतीति B. 5 ॰मुस्पे॰ B. 6 G1 repeats here यज्ञस्य ''' ॰तस्मि ( lines 11-13 ) within brackets. 7 तृ J. 8 मद्य॰ J 9 ॰देदान्त्य॰ J. 10 ॰स्ये॰ K. 11 ॰क्ष॰ G1, G2. 12 ॰सि B; छ॰ J. 13 J adds नि. 14 ॰णा॰ G1, K. 15 ॰स्येप्रधि॰ G1, G2, J, K. 16 तथा॰ B. 17 In B only.

अथ द्रव्यसमुद्देशः ।
राथन्तराणि रथन्तरपृष्ठेऽभिरूपाणि, वार्हतानि[1] वृहत्पृष्ठे[2], उभयविधान्यु[3]-
भयसाम्नि । cp. PB. 8. 3. 7; Caland ibid.
द्रवदिडानि[4] रथन्तरपृष्ठे, ऊर्ध्वेडानि बृहत्पृष्ठे । cp. PB. 10. 12. 4.
5 अथ यत्र रथन्तरपृष्ठे वार्हतानि क्रियेरन् बृहद्दीप्सया[5] तानि[6] विद्यात् ।
cp. PB. 8. 3. 7; Say. ibid.
एवमेव वृहत्पृष्ठे[7] राथन्तराणि स्वयोनीनि[8] सर्वत्राभिरूपतराणि ।
अस्वयोनिभ्यः सामान्या[9] ऋचाम्[10], असामान्याभ्यश्छन्दांसि[11] प्रथमाः सामान्या[12]
इत्याचक्षते ।
10 अथ या[13] यज्ञप्रवादाः[14] [सत्रप्रवादाः][15] क्रतुप्रवादाः स्तोमप्रवादाः सर्वत्र[16] ता
अभिरूपाः ।
शुक्रवत्यो[17]ऽप्रवादाः पूर्वयोः[18] पवमानयोः ।
होतृप्रवादश् हविष्प्रवादश् समिद्धवद्धोतुराज्यम् ।
हुतवन्ति पीतवन्ति[19] तृप्तवन्त्युत्तराणि ।
15 मरुत्वत्यो[20]न्न[21]प्रवादाः कृतवत्यो[22] माध्यन्दिनीयाः ।
परिवत्यः कोशवत्यो[23] निषण्णवत्यो माध्यन्दिनीयाः[24] ।
गायत्र्यां[25] वा तत्[26] त्रिष्टुभि वा मरुत्वच्चिकीर्षितं[27] भवति ।
अथ खल्वाह—"त्रीणि सवनानां छिद्राणि, तानि तेनापिधीयन्ते" इति ।
PB. 7. 3. 19.
20 "कतमानि छिद्राणीति ।
पवमाना[28] अदेवतास्तुतयः[29], तानि छिद्राणीति ।
अथाप्यन्तरेण पवमानांश्चावर्त्तीनि[30] च हविर्भिः प्रचरन्ति, तानि
छिद्राणीति ।" cp. Say. PB. 7. 3. 19; Caland ibid.

1 वार्हत्र० G1. 2 ०ष्ठेषु C. 3 ०धाद्यु० C. 4 द्रवद्दानि B; प्रवदितानि C; द्रन्यदिडानि J, K. 5 ह is wanting in B. 6 ताभि G1, G2, J. 7 ०ष्ठेन C. 8 नीति G1, G2, J, K. 9 सामन्यार्कं C, सामन्या J, K. 10 ऋचासोमेमन्या० G1; ऋचाम्सामन्या० G2, ऋचसामान्या० J; ऋचमसामन्या० K. 11 ०श्छान्दसी C, G2, J, K, ०श्छन्दसी G1. 12 सामन्या C; समन्या J, K. 13 वा B. 14 दात् B. 15 Wanting in B, K. 16 सर्वत्राभि० B. 17 ०त्योजः प्र० B. 18 B adds श्रुतवत्यो. 19 Wanting in J. 20 त्व is wanting in G1, G2, K; ०मरुयोत्यो० J. 21 ०त्यो घुम० C, G1, G2, J. 22 क्रत० C, G1, G2. 23 कौश० G1, G2, K; कैश० J. 24 मध्यन्दिनान्तया: B; माध्यदिनातीया G1, G2; मार्ध्यदिनांनीयान्व J, K. 25 य is wanting in G1, G2, J. 26 तस्लि० C. 27 रु is wanting in G1. 28 पवमाना ··· प्रचरन्ति wanting in J. 29 ०याः C, G1, G2, J, K. 30 S has ०नमावृत्तीनि.

वामदेव्यं[1] मैत्रावरुणसाम सर्वत्राभिरूपम्, तदपचारे तल्लिङ्गीयांश्चिकीर्षेत्[2]।
अथैतानि तार्तीयसवनिकानि[3] रूपाणि।
स्वादुमत्यो मधुमत्यो मद्वत्यं ओजस्वत्यो विश्ववत्यश्चित्रवत्यः सूर्यवत्यो[4]
दक्षिणवत्यो[6] निहूतवच्च वृद्धवच्चोक्थेषु[5]।
5 अथ नार्मेधस्तोत्रीये वदति[7]—
"ककुप् प्रथमाथोष्णिगथ[8] पुरउष्णिगनुष्टुप्" इति। PB. 8. 8. 26.
ककुबेव[9] प्रथमा, उष्णिग् द्वितीया, "पुरउष्णिक् तृतीया, दाशतयेनाध्यायेन[10]
तां बह्वृचा अधीयते—Sāy. ibid.
'युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे।
10 इन्द्रवाहा वचोयुजा[11] ॥' इति। RV. 8. 98. 9; SV. 2. 62.
तत्र वयं चत्वार्यक्षराण्युपाहरामः 'स्वर्विदा'[12] इति।
सानुष्टुब् भवति[13] उपरिष्टाज्ज्योतिः" ॥ ११ ॥ Caland quotes l.5-13
on PB. 8. 8. 26.

कथमु षोडशी ज्योतिष्टोम इति।
15 अकर्तव्य इति शौचिवृक्षिः।
अन्तरितो[14] ब्राह्मणसमाम्नायेन[15], तथा[16] ऋक्समाम्नायेनेति।
कर्तव्य इति गौतमः।
षोडशिनः स्तोत्रे[17] "देयेति[18]" भवतीति।
अथापि न आर्षेयकल्पो दर्शयति[19]—
20 "द्वादशाहस्य[20] षोडशिमन्तावतिरात्रौ[21]" इति। Ārṣ. IX. 1. a.
अथापि मन्त्रवर्णो भवति[22]—
"त्रीणि ज्योतींषि सचते स षोडशी" इति। PB. 12. 13. 32.
त्रिरुपेतो[23] द्वादशाहो[24] भवतीति चैतद् भवति।

---

1 ०व्यमै० B, J. 2 ०षा० C, G1, G2, J, K. 3 तात्रीयवसवनिका G1; तात्रीयवसवनिका G2; तार्तीयवसवनिका J; नि is wanting in K. 4 मध्वस्वत्यो वि० C, मधत्योधस्वत्येत्यो वि० G1, G2; मध्वत्यो वि० J, K. 5 ०त्या J. 6 दक्षिणतात्यो निहूत० B; दक्षिणवद् योनिदूत० C. 7 वधे wanting in J. 8 ०मा यो० C, G1, G2, J. 9 क वे B. 10 दाशतय्यान्तां S. 11 ववायु० J. 12 सुवर्विदां B, स्वर्च्चिदा S. 13 ह्रता S. 14 ०रिते C, G1, G2, J, K. 15 ०येनेति C. 16 तथा ऋक्समाम्नायेनेति wanting in C; त समा० G1, G2; तत्समा० J, K. 17 दे० G1, G2. 18 C, G1, G2, J, K add दि. 19 ०यतीति B. 20 ०शान्तस्य B; ०शाहात्य G1, G2; ०शाहत J. K. 21 ०न्तवेतिरात्रोविति G1, G2, J. 22 G1 adds व. 23 ०पेते B. 24 ०हे B, G1, G2, J, K.

सꣳस्थाम[1]न्यस्यैतां विद्यमानो[2]ममन्यत इति गौतमः ।
एवं च रहस्यब्राह्मणे दर्शयति—अप्य[3]नेन षोडशिसꣳस्थेन यजेतेति ।
नोहा[4]स्यैषा सꣳस्था विद्यत इति शाण्डिल्यः ।
अतिरात्रे तु कृ[5]ताकृतो भवति ।
5 एवमिवाध्वर्युब्राह्मणं भवति—नोक्थ्ये[6] ग्राह्यो ना[7]तिरात्रे[8] ग्राह्य इति ।
सन्धी[9] इमौ भवत इति धानञ्जय्यः ।
उद्यसन्धिरसाव[10]स्तमयसन्धिरयम्[11] । Ārṣ. K. V. 22 b.
त[12]स्माद्यः कश्चातिरात्रः षोडशिमा[13]नेव[14] स कुश[15]लेनेति ।
"तस्यैता ऋचः पञ्चविꣳशत्यक्षराः पञ्चपदाः पञ्चाक्षरपादाः ।
10 नवोपसर्गाक्षराणि[16], आदितस्त्रयाणां पादानां त्रीणि त्रीण्युपसर्गाक्षराणि पादा[17]न्तेषु भवन्ति ।
तेऽष्टाक्षराः सम्पद्यन्ते ।
पञ्चाक्षरावुत्तरौ, दशा[18]क्षरोपयुक्ताश्चतुस्त्रिꣳशदक्षराः सम्पद्यन्ते ।" Say. PB. 12. 13. 22.

15 अन्त[19]स्थास्तदुपसृष्टाः ।
केनो विद्या[20]मेति ।
इत्थꣳ ह्येव[21] वयमधीमहे ।
तथा बह्वृचा इति ब्राह्मणेनेत्याहुः—"चतुस्त्रिꣳशदक्षराः सꣳस्तु[22]तो भवति" इति । PB. 12. 13. 24.

20 अनुप[23]सृष्टः कनीयानिति वैतद् भवति ।
अथाप्यु[24]द्ध्रियमा[25]णेषूपसर्गाक्षरेषु नैवार्थो हीयते, न वृ[26]त्तिर्दुष्यति ।
अथापि शश्वदेना अनुपसृष्टा आथर्वणिका अधीयते[27] ।
अथापि निर्धारितानामुपसर्गाक्षराणां वदति ।

---

1 म is wanting in G1, G2, J. 2 ०नां मन्य C, G1, G2, J, K. 3 अथ तेन C. 4 ना० C, G1, G2, J, K. 5 कृता० G1, G2, J but G2 strikes off कृ and writes कृ above it. 6 ०क्थ्यो C ख, G2, J; नोष० C क; ०क्थ्योष G1; G1 adds (नाहास्यैषा सꣳस्था विद्यत इति शाण्डिल्योऽतिरात्रे तु). 7 ऽति० C, G1, G2, J, K. 8 J repeats ग्राह्यो ऽतिरात्रे. 9 सन्धि B. 10 ०म० B. 11 ०रपि C; ०रये J. 12 एत० C. 13 ०शिनमा० G1, G2, K. 14 ०ने J, K. 15 ०न्येति० B. 16 ०राश्च C; 17 पदा० B. 18 दशाक्षरावेकस्ताश्च० C, दशाक्षरोवैकस्ताश्च० G1, G2, J, K, S. 19 न स्था उप० C; अतस्था उप० G1, J. 20 विद्या मे तीर्थ२० C, G1, G2, J. 21 ह्येतमधीमहे । J, ०ह्येतवमहीमहे । K. 22 ०स्क्रतो B; ०स्तुतो G1, G2, J. 23 ०क० G1, J. 24 ०प्युभी० C. 25 य is wanting in J, K. 26 न्यत्तिदु० G1, G2, J. 27 ०न्ते G2.

"अथवा एता एकपदा[3]स्त्र्यक्षरा विष्णोश्छन्दो भुरिजः शाक्वरः" इति ।
PB. 12. 13. 22.

त्र्यक्षराण्यपि भुरिजो भवन्तीति ।[6]

तत्रैतद् गौरीवितं गायत्रीसामं, आनुष्टुभम्, रात्र्या समानभागः समानभक्षो भवतीति ।

स यद् "गौरीवितं गौरीवित्य ईमा ऋचः स्वयोनि" कुर्वते ।

ऋपिः स्वयोनिर्भविष्यतीति[12] ।

एतेन सौभरनार्मेधे व्याख्याते, रैवती च वारवन्तीयम् ॥ १२ ॥

ज्योतिष्टोमात्पाद[13]मेके षोडशिनं ब्रुवते ।

10 तत्र चास्य ब्राह्मणमधीयते ।

अथापि कथमेवं कृत्स्नं कर्माकृतैर्मन्तरयिष्यदिति ।

"चतुर्थोत्पादं वयं तत्र चास्य ब्राह्मणमधीमहे ।" Ārṣ. K. V. 20 b.

अथाप्याह—एकविंशायतनो वा एव यत् षोडशीति ।

तदेकविंशमहर्भवति ।

15 अथाप्याह—दाशतय्य ऋचश्चतुरुत्तरंच्छन्दः, क्रमे वा एवंविधमुत्पद्यते न प्रथमकृताविति ।

अह्नो भवती२ रात्रेरिति ।

अह्नो भवतीत्याहुः ।

अभुज्यं चास्य हविर्भवति ।

20 अथापि नियुक्तधर्मा भवति[21] ।

विद्वांश्छिल्पवान् मेधवान् ।

यथाहरेवं रात्रेरित्यपरम् ।

रात्र्या समानभागः समानभक्षो भवतीति ।

---

1 उप वा K. 2 ०पा० B. 3 ०दा अक्ष० G1, G2. 4 भूरितः G1; भू० G2, J. 5 ०रा ह्यपि C, G1, G2, J, K. 6 B here reads एतेन सौभरना··· 7 ०सामान्या B; सामाभ्यासानु० C, G1, G2, J. 8 Wanting in C; गौर० B; ०वतं G1. 9 मा G1, G2, J. 10 ०चोऽस्व० C, G1, G2, J, K. 11 ०योन्कुरुत B. योनि कु० G1, G2, J, K. 12 ०ती० C. 13 ०मेव C, J; ०मैक G1. 14 ०तमितिरे-ष्यदिति B. 15 अथाप्या G1, G2, J, K. 16 ऋचो चा० C, G1, G2, J, K. 17 ०रं C, G1, G2, J, K. 18 ०सा B. 19 ०वति B. 20 आहवर्जं C, G2, J; आहर्जं G1. A second hand in G2 strikes off व; अहर्वर्जं K. 21 ०वती G1, G2 but the latter corrects it; ०वतीति J, K. 22 निवक्तान्छि० C; निरिक्तान्छि० G1, G2. 23 गृह० B. 24 ०पराम् G1, G2, J, K. 25 B repeats it.

तौ खल्विमौ द्वौ सन्धी भवतः ।
तयोरसौ नित्यः कृतां[1]कृतोऽयम् ।
कस्[2]य हेतोरिति ।
सार्द्धं[3] तेन रात्रिः[4] पञ्चदशविधतां लभते ।
5 कृतं पञ्चदशविधमहरिति ।
अथापि न तमुद्धृत्य पराक् स्तोत्रं रात्रा[5]वलप्स्यत ।
कृतान्यत्रा[6]वर्तीनि ।[7]
अथापि न तमुद्धृत्य तद्देव[8]त्यं स्तोत्रं रात्रा[9]वलप्स्यन ।
कृतान्य[10]त्रैन्द्राणि ।
10 अथापि विद्यते तस्य कालस्य स्तुतिर्नास्य विद्यते ।
[कस्मात्[11] तस्य न विद्यते ।][12]
पराङे[13]तस्यां वेलायामादित्यो भवति, नो परा[14] च स्तुतिर्विद्यते ।
उदाहरन्ति द्वे[15] च परां[16] च स्तुतिम् ।
हिरण्यस्[17]तूपे भवति—
15 'अस्याद्[18]देवः प्रतिदोषं गृणानः' इति । RV. 1. 35. 10.
"अथ खल्वाह[19]—'शक्करीषु षोडशिना स्तुवीत' इति । PB. 12 13. 13;
LŚ. 10. 2. 1.
तत्रैके महानाम्नीः[20] प्रति[21]यन्ति ।
एताः शक्वर्यो भवन्तीति ।
20 एतास्वेव शक्करीप्रवादो भवतीत्यपरम् ।
एताश्चाधिकृता भवन्तीति ।" cp. Caland PB. 12. 13. 13.
ओङ्कारो विशेष[22]श्रुतेः सर्व[23]सामस्तु स्यादित्येके ।
स वाचा रथन्तरे[24] निवर्तेत ।
यथा त्रय[25]स्त्रिंशं[26] तृतीयसवनमिति ।

1 कृतोकृतः J. 2 करस्य J. 3 साध्यं B; रार्द्ध J. 4 रात्रि J. 5 ०न्या० G1, G2, J. 6 ०त्रावर्तिनि B; ०त्रावर्त्तीनि G1; ०शवर्त्तीनि G2, J. 7 Wanting in C along with the next line. 8 ०वत्याह G1, G2, J, K. 9 ०न्या० G1, J. 10 ०न्या० J. 11 ०स्तु C. 12 Wanting in B. 13 परोदे० G1; परांदे० J, K; परोदे० G2. 14 पचरा B; G1, G2, J read पराव for परा च. 15 C, G1, G2, K read त्वेव for द्वे च; त्ये J. 16 ०रा च स्तुति B; पराववस्तु० G1, G2; वशवस्तु० J; परावः स्तु० K. 17 ०स्तवे B. 18 ०देवः C. 19 ०वाद G1, G2, J but a second hand in G2 has changed द into ह. 20 ०नाम्निः B; ०नाम्नी G1, J, K. 21 प्रवि० G1, G2, J. 22 ०षः श्रुतः C; ०षश्रुतः J. 23 ०सामं सं B. 24 ०रेण C; ०रा G2; ०रो J. 25 त्रय-स्त्रिंशत्० G1, G2, J; त्र त्रय० K. 26 ०शे G2, J, K. 27 त्रयस्त्रिंशस०B, G1.

अभि[1]परीत्य प्रत्यपं[2]कर्[3]स्ताद्दशमेतद् भव[4]तीति ।
समुच्चयो वा[5]नन्यार्थत्वात् ।
प्रस्तावशान्त्य[6]र्था हि वाक् ।
उद्गीथादि[7]शान्त्यर्थ ओङ्कारः ।
5 वाक्पू[8]र्वा सामा[9]न्यात् ।
एवं यथान्तरप्रत्यासत्तिः ।
उत्त[10]रां वा[11]क्ं सा[12]मान्यविधेराचाराच्च ॥ १३ ॥

---

1 अहरत्यस्तोमसन्त्याभिपरित्य B. 2 प is wanting in B. 3 ०र्स्ता० C. 4 ०वति C, G1, G2, J, K. 5 वा नानार्थ० G1, G2, J, K. 6 ०शान्तर्था G1, G2; ०शान्ततर्था J. 7 ०थादे० G1, G3. 8 वाक् पू० C; वाक्तुपूर्वं G1, G2, K; स्तुपूर्वं J. 9 स्याद् C, G1, G2, J, K. 10 उत्तरीं G1, G2, J. 11 वा C, G1, G2, J, K. 12 जघन्य० C, G1, G2, J, K.

# अथ तृतीयः प्रपाठकः

अथ का प्रथमा संस्थेति ।
आग्निष्टोमीं[1] प्रथमां मन्य इति शाण्डिल्यः ।
प्रथमं[2] ह्येव स्थानं भवति ।
अथापि प्रथममधीमहे[3] ।
5 अथाप्यणु[4]प्रमुखानि भूतानि भवन्त्य[5]परोवरीयां[6]सि ।
अथाप्याह—"यज्ञमुखं[7] वा अग्निष्टोमः" इति ।
अथाप्येतया संस्थया चरति ।
अथाप्येषा समा[8]रब्धतमां[9] हं[10] भवंतीति[11] ।
अथापि नाग्निष्टोममकृत्वापरे[12] संस्थे[13] करोति ।
10 नह्यनुपादाय प्रथमामुत्तरयोः सिद्धिरस्ति ।
अनुपादायोत्तरे प्रथमा सिध्यतीति ।
अथाप्याह[14]—प्रजापतिर्वा एषा संस्थानां यदग्निष्टोमः[15] ।
तां यदकृत्वाथान्यां कुर्यात्, प्रजापतिरस्य हिंसितः[16] स्यादिति ।
यावदादेशमुत्तरे सर्वत्र ।
15 अथाप्यूर्ध्वानामेव संस्थानां कृतानां वेदेति[17]—
"देवा वा[18] अग्निष्टोमममभिजित्वोक्थानि[19] नाशक्नुवन्नभिजेतुम्"[20] इति ।
PB. 8. 8. 1.

---

1 अग्निष्टोमं B. 2 ०मां C, G1, G2, J. 3 B adds इति. 4 ०प्युणु० G1, J. 5 ०न्ति परो० C, G1, G2. 6 ०यं० G1, G2. 7 ०ज्ञमग्नि० C, J; ०ज्ञन्वाग्नि० G1. 8 ससा० J. 9 ०मां G1, G2, J, K. 10 Wanting in C, G1, G2, J, K. 11 ०वति G1, G2, J, K. 12 ०पार G1, G2, J. 13 स्थे ... संस्थानां (line 12) wanting in J. 14 अथा प्राह G1. 15 यदग्नि० J. 16 ०ंस्यमित G1. 17 ०दे० G1. 18. Wanting in G1, G2. 19 ०ष्टोमंभिजित्योस्थानि G1; ०जित्वो- स्थानि G2; ०ष्टोननेजित्या स्थानिस्थानि J. 20 C, J add देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नुवन्नभिजेतुन्; G1, G2 add देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नुवन्नभिजेतु देवा वा उक्थान्यभिजित्य (०जि G1) म्.

अथापि नैतेद्देवताः प्राहू राका सिनीवाली सरस्वती विष्णुरिति।
सौविष्टकृतं खल्वेतत् सोमस्य स्थानं यदाग्निमारुतम्।
योऽयं देवताः शंसन् सोऽप्यतिरात्रे संतीहैव प्रत्याहृत्य शंसती-
त्युक्थ्या।
5 तां प्रथमां मन्य इति गौतमः।
एवमात्ताहर्मात्रासमानि सवनानि अभ्युंद्धियन्ते।
आर्भवच्छन्दांसि अनुंविधीयन्ते।
प्रस्थितयोज्या ग्रहैश्च शस्त्रैश्च।
अप्यहमेनमाग्नूर्त्तिनमिव मन्ये योऽग्निष्टोमयाजीति।
10 ध्रुवमनु द्वादशस्तोत्रात्पूर्वं तत्प्रस्थितयाज्याभिर्विजानीम इति ॥ १ ॥
अतिरात्रीं प्रथमां मन्य इति धानञ्जय्यः।
कृत्स्नं पूर्वं कर्म[16] परिपादया इति।
अथापि सं मिमीते।
"एषा वाग्निष्टोमस्य सम्मा यद्रात्रिः।" PB. 9. 1. 23.
15 "एषा वा उक्थस्य सम्मा यद्रात्रिः।" इति। PB. 9. 1. 25.
कुतो ह्येन प्रथमा स्यादिति।
अथापि नः स्तोमसमाम्नायः।
प्राह—अतिरात्रस्यैव स्तोमसमाम्नायो भवति।
अथापि न उक्थसमाम्नायः।
20 प्राह—अतिरात्रस्यैव प्रथममुक्थानि समामनामः।
अथापि नः कर्मणो यजूंष्यपि प्राहुः—
उपरि सन्धिभक्षात् स्तोमविमोचनमधीमहे।

---

1 नोन्तदेवताः B; नोतदेवताः G1, G2, J. 2 ०विकृह० K. 3 ०तस्य B. 4 C, G1, G2, J add स; सा यायं K. 5 शंसिनस्ता मप्य० C; शंसिनस्ता मप्य० G1, G2, J, K. 6 स is wanting in B. 7 मप्या० C, G1, G2, J. 8 ०स्थं C; ०स्थ *G1, G2, J*; ०स्थम *K*. 9 एवं प्राप्ता० C. 10 मप्यु० C, G1, G2, J, K. 11 अनुधी० B. 12 ०तमाया C; ०तयाया G1, G2, J. 13 ०मेतमेवमा० C. 14 ०भिर्वि० B. 15 ०रात्रं C. 16 ०र्मा B. 17 परिपादया B; ०परीपादाय C. 18 सन्मिते B. 19 सेमा यद्रात्रिः G1, G2, J. 20 कु is wanting in G1, G2, J, K. 21 प्रामा G1, G2, J, K. 22 स० B, G1, G2, J, K. 23 ०मः स० G1, G2, J, K. 24 ०यथः G1, G2 J. 25 ०मः स० B. 26 ०भवतो B. 27 ०न्ति G1, G2, J, K. 28 ०क्थ्य० C, G1, G2, J, K. 29 ०क्थ्यानि C. 30 समाम is wanting in G1, G2. 31 यजूंष्यपि प्रा० C क. 32 ०मह्य G1; ०महृवद् G2, J. 33 ०ना० G1, G2, J.

यन्नूनमन्या प्रथमा सꣳस्थाऽभविष्यत् प्राकृतं[2] स्तोमविमोचनं समाम्नास्यन्निति ।

अथापि शश्वद्बह्वृचा अतिरात्रीमेव प्रथमामधीयते ।

तासां को काम्या का सर्वाभिप्रायेति ।

5 आग्निष्टोमीं चातिरात्रीं च ब्रुवते शौचिवृक्षाः ।

सर्वाभिप्रायेऽनवधारितकामे भवत इति ।

"एकस्मा अन्यो यज्ञः कामायाह्नियते सर्वेभ्योऽग्निष्टोम" इति न काममवधारयति । PB. 6. 3. 2.

ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो[10] यजेतेति नैव काममवधारयति ।

10 "पशुकाम उक्थेन स्तुवीत" इति काममवधारयतीति । PB. 8. 8. 8.

सोऽशिथिला परिसꣳस्थिता भवतीति ।

सर्वाः सर्वाभिप्रायाः ।

सर्वासु काम्यानि विद्यन्त इति शाण्डिल्यैः ।

तथा गौतमधानञ्जय्यौ ।

15 सर्वाभिप्रायैः खल्वयं ज्योतिष्टोमः ।

सर्वाभिरेव सꣳस्थाभिः सर्वाभिप्रायो भवतीति[13]

यद्वेतदवधारितकामेति, पश्यामो वै वयꣳ सर्वाभिप्रायेषु काममवधार्यमाणम् ।

यथोपर्वती ग्रामकामस्य, प्रतिष्ठाकामस्य रथन्तरꣳ सन्धिपामेति रथन्तरꣳ

20 सन्धिपामेति[15] ॥ २ ॥

सप्तमः पटलः

तस्य खल्वस्य ज्योतिष्टोमस्य षड् व्यञ्जनस्थानानि भवन्ति—

प्रतिपद् गायत्रंणिधनं विष्टुतिर्ब्रह्मसामोक्थप्रणयः सन्धिपामेति ।

तेषां किं काम्यं किꣳ सर्वाभिप्रायमिति ।

25 यद्यत् खल्वस्य ज्योतिष्टोमस्य चरति तत्तत्सर्वाभिप्रायम् ।

अथ यत्कामं[23] निवर्तते तत्काम्यम् ।

1 प्र० is wanting in G1, G2, J, K. 2 ०कं C, G1, G2, J, K. 3 ०त्रमेव B; ०त्री G1, G2, J. 4 ०मम० B. 5 Wanting in C. 6 सर्वप्रयेति B. 7 अग्नि० B. 8 Wanting in K. 9 ०भ्ये B. 10 स्य is wanting in G1, G2, J. 11 ०प्रायसं ख० G1, G2; ०प्रायः सं ख० J; ०प्रायस्त ख० K. 12 C, G1, G2, J, K add 13 ०वती G1, G2, J, K. 14 ०वीनी G1, G2, J, K. 15 C does not repeat it. 16 In B only. 17 ०त्रं त्रिणि० C. 18 ०न्धिसा० C, K. 19 Wanting in J. 20 प्रतिपद्द C, G1, G2, J, K. 21 ०म G1, G2, J. 22 चरिते B. 23 ०काम्यं C, G1, G2, J, K. 24 ०कामम० B. C, G1, G2, J, K.

प्रतिपत् सर्वाभिप्राया।
सर्वा ह्यवधारितकामा भवन्तीति।
उ[1]पवतीत्याहुः।
प्रथमा[2]मन्वेनामधीमहे।
5 अपि चैनां[3] ग्रामकामस्यो[4]ह—ग्रामैः[5] सर्वाभिप्रायो भवतीति।
अथाप्यस्या[6]चारं दर्शयति—
ततश्चतुर्षु मासेषु शुना[7]सीर्यस्य लोके[8] ज्योति[9]ष्टोमोऽग्निष्टोम उपवती[10]
प्रतिपदिति।
"एषां[11] रथन्तरपृष्ठेऽग्रियवती बृहत्पृष्ठेऽग्रियवद् वार्हतं रूपमुपवद्[12]राथन्तर-
10 मुपवती रथन्तरेऽग्रियवती बृहतीति च भाल्लविनाम्।" Ārṣ. K. V. 18 a.
अथाप्येनाꣳ सो[13]ह्यस्योत्तमे स्तोत्रीयै[14]स्योत्तमां दर्शयति—
औभ[15]यसाम्यात् तां न प्रथमाम्।
ब्र[16]ह्म गे[17]रैव तद् व्याख्यातम्।
15 अथाप्याहाभिषेचनीये—
'यत्[18]' 'पवस्व वाचो अग्रियः' इति, SV. 2. 125; RV. 9. 62. 25; PB. 4. 2. 17; Ārṣ K. I. 1 b.
तेन यज्ञमुखान्न यन्ति।" इति। PB. 18. 8. 10.
भक्त्यौ[19]पश्रयं दर्शयति।
20 तदपि शश्वद् ब्राह्मणं भवति—
एते वा[20]व प्रतिपदौ[21] सर्वाभिप्राये यदुपवती चाग्रियवती च।
[ कामाय वा इतरा आह्रियन्त इति। ][22]
स्वरो गायत्रणिधनानां प्र[23]थमा विष्टु[24]तीनाꣳ श्यैतं[25]नौधसे ब्रह्मसाम्नाम्।
षडुक्थानि सर्वाभिप्रायाणि भवन्ति।
25 साकमश्वꣳ सौभरनार्मेधे हारिवर्णो[26]द्वꣳशीये आष्टा[27]दꣳष्ट्रमिति।

---

1 अपव० J. 2 ०मा चैनाम० C; ०मां चैनामधीनामधीमहे G2. 3 तां C; चेतां G1, G2, J; च तां K. 4 ०स्य ह० C. 5 ग्रांह: B. 6 ०स्याश्विरं C; ०स्याश्वरिं G1, G2, J, K. 7 ०नाद्यी० C; ०नाप्सीर्य J. 8 ०क J. 9 ज्योति ज्योतिष्टोम G1, G2; ज्योतिष्टोम उप० J; 10 उपपदी B. 11 एषां B. 12 C, G1, G2, J, K omit द्राथन्तरमुपव. 13 साह्य० G1, G2, J. 14 ०त्र० G1, G2, J. 15 औभय स्यौभय० G1, G2; औभयस्यौभय० J. 16 ब्र० G1, G2, J, K. 17 G1, G2, J omit प. 18 ०स्यपिश्रयं B; ०स्या प्रश्रयं C; ०स्या प्रलयं G1, G2; ०स्या प्रश्रययं J. 19 त is wanting in G1, G2. 20 वा B. 21 ०पादौ G1, G2, J. 22 Wanting in B. 23 B, K add प्रथमा. 24 विष्टु० J. 25 ०श्ये० G1, G2. 26 हावर्णोद्व० G1, G2; हार्वर्णोद्व० J. 27 आष्ट्रा० B.

तयां कान्युक्थे[1] कान्यतिरात्र इति ।
सर्वेषां याथाकामीति[2] शाण्डिल्यः ।
हारिवर्णोद्वंशीये वा हारिवर्णा[3]ष्टादंष्ट्रे वोकथान्ते [चैव[4]] कुर्यादिति
गौतमः ।
5 अति[5]रात्रे सौभरनामेधे ।[6]
तच्चर्या[7] जानीमः ।
हारिवर्णोद्वंशीये वा हारिवर्णा[8]ष्टादंष्ट्रे वोकथान्ते[9] चैव कुर्यादिति[10] ।
[11]अतिरात्रे चेति धानञ्जय्यः[12] ।
सौभरनामेधे त्वेवोक[13]थान्ते न कुर्यादिति ।[14]
10 रथन्तरं सन्धिपाम्नो[15]ं सर्वाभिप्रायम् ।
तद्धि[16] चरति ।
तत्र यानि कामावधारणानि सर्वाभिप्रायेषु[17] तानि भवन्ति ।
तानि खल्वेतानि व्यञ्जनान्येकजातीयान्येव समादध्यात् ।
एवं चाव्याहतः क्रतु[18]र्भवति ।
15 अपि चैवमार्षेयकल्पो दर्शयति ॥ ३ ॥
अथानुष्टुभ[19]स्य भागस्य का छन्दोभक्तिरिति ।
एकाक्षरां ब्रुवते[20] [21]शौचिवृक्षौ[22] ।
तद्विजानीमः ।
बह्वक्षरप्रवादो भवति ।
20 एकाक्षरा वै वाक्[23] ।
अक्षरेणान्ततः प्रतिष्ठाप्यमक्षरम् ।
व्यक्षरमुच्छिष्यत इति हि भवतीति ।
सर्वैव द्वात्रिंशदक्षरेति शाण्डिल्यः ।
तथा गौतमधानञ्जय्यौ ।

1 कन्यु० J. 2 ०मी G1, G2, J, K. 3 हावर्णा० G1, G2, J. 4 Wanting in B, C; वव G1, G2, वैव J. 5 ति is wanting in G1, G2, J. 6 B reproduces here त्वेवोक्थान्वे न कुर्यादिति रथन्तरं सन्धिषाम्नां सर्वाभिप्रायं तद्धि चरनि । (lines 9-11). 7 ०च्चर्याय B; ०चर्यो J. 8 ०र्णावाष्ट्रा० B. 9 ०वथ्यंक्थाते G1, G2, J. 10 ०र्याद् C. 11 रात्रे G1, G2, J. 12 ०य्ये B. 13 वो० C; न्वो (त्वे G2) वोक्थान्ते कुर्यादतिरात्रे चेति धानञ्जय्यः सौभरनामेधे वो० G1, G2, J. 14 K repeats रात्रे चेति ··· कुर्यादिति. 15 ०षाम्लं G1; ०षाम्लां G2, J, K. 16 तद्विच० C, G1, G2, J. 17 ०ये सुतानि C. 18 ०तुर्त्तवति G1, G2, J. 19 ०ष्टुभाग० G1, G2; ०ष्टुप्भाग० J. 20 ०तो G1, G2, J. 21 शो० G1, G2, J. 22 ०क्षः G1, G2, J. 23 वा is wanting in G1, G2, J.

एतामनुष्टुबित्याचक्षते ।
अथाप्येनामनुष्टुबर्थे [ निधीयमानां ] पश्यामः ।
अथापि यस्तावदकुशलं छन्दसामौक्थ्यैकामनुष्टुभं पृच्छेदेतामेव द्वात्रिंशदक्षरामाचक्षीत ।
5 तत्खलु गायत्रं प्रातःसवनं, त्रैष्टुभं माध्यन्दिनं, जागतं तृतीयसवनम् ।
यदूर्ध्वमुक्थेभ्य आनुष्टुभः स भाग इति ।
कथमु द्वादशस्तोत्र आनुष्टुभो भागः स्यादिति ।
सवनानि प्रति प्रविष्ट इति गौतमः ।
"अष्टाक्षरा गायत्री, हिङ्कारो नवमः, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा
10 जगती च्छन्दोभिरेवानुष्टुभमाप्नोति यजमानस्यानवलोपाय ।" इति । PB. 6. 3. 13.
अन्त्यस्थान एष भाग इति शौचिवृक्षिः ।
एकविंशस्तोमो वाक् सामान्तः ।
एष नूनं द्वादशस्तोत्रे आनुष्टुभो भागः स्यादिति ।
15 सर्वेव षट्त्रिंशदक्षरेति शाण्डिल्यः ।
तत्र यच्चत्वार्यक्षराण्युपाहरति परोक्षीचिकीर्षन्निति ।
पदप्रत्यवरोहः शौचादिरेयः ।
यथैतद् ब्राह्मणम्—द्वादशाक्षरमेकादशाक्षरमष्टाक्षरं वाग्द्वात्रिंशीति ।
पञ्चदशस्तोत्रे सवनानि प्रति प्रविष्ट इत्येव गौतमः ।
20 अच्छावाकस्तोत्रीये शौचिवृक्षिः ।
अथ षोडशिनि सर्वेव चतुस्त्रिंशदक्षरेति शाण्डिल्यः ।
तत्र यद् द्वे अक्षरे उपाहरति परोक्षीचिकीर्षन्निति ।
उपसर्गाक्षराणि शौचिवृक्षाः ।

1 तथा॰ B. 2 Wanting in B; G1, G2 repeat य. 3 ॰मानानां C, K. 4 ॰दन्कु॰ G1, G2;॰ दकु॰ J. 5 ॰क्थिक॰ C, G1, G2, J, K. 6 G1 repeats पृच्छेदेतामेव द्वात्रिंशद; G2 repeats within brackets पृच्छेदेतामेव द्वात्रिंशद. 7 C, K add सवनं; G1, G2, J read ॰नसवनं सवनं. 8 ॰न्दो G1, G2, J. 9 ॰र्म G1, G2, J, K. 10 अ॰ G1, G2, J. 11 Wanting in G1, G2, J, K. 12 के॰ G1, G2, J. 13 शि is wanting in G1, G2, J. 14 अन्तन्त॰ C. 15 ॰घ: G1, G2, J. 16 ॰म॰ G1, G2, J. 17 ॰त्सानु॰ C; ॰त्रं अनु॰ G1, G2, J; ॰त्रं मानु॰ K. 18 षट् त्रिंश॰ C. 19 ॰त्रेव C. 20 ॰प॰ B. 21 ॰तिर्धीर्षन्निति G1, G2; ॰तिर्धीर्षन्निति J. 22 पाद॰ B. 23 शौचादिरे॰ B; शौचादिरेयः C. 24 B omits ति. 25 C, G1, G2, J, K add अथ. 26 ना is wanting G1, G2. 27 ॰ष G1, G2. 28 G1, G2, J add अक्षरे. 29 इति is wanting B, K.

दशाक्षरपादं शौचा[1]द्रिेयः ।
अथातिरात्रे सर्वैव द्वात्रिंशदक्षरेति शाण्डिल्यः ।
तां यदभ्यासेन करोति प[2]रोक्षीचिकीर्षन्निति ।
वै[3]तहव्यस्तोत्रीये[4] शौचिवृक्षो[5]ः ॥ ४ ॥
5 अथायं सन्धिरन्तर्भागं भव[6]ती३ बहिर्भागमिति ।
बहिर्भागमित्याहुः ।
समाप्तेषु भागेष्वागच्छति ।
[ अथा[7]प्यस्या छन्दसा भक्षयति बहिर्भागमिवैव स त[8]त इति ।[9]
अन्तर्भागमित्यपरम् ।
10 का सा भक्तिर्या बहिर्भागमिति ।
अथाप्येनमुक्थैः सम्मिमीते ।
अन्तर्भागमुक्[10]थानि भवन्ति ।
अन्तर्भागः सन् किंभागः स्यादिति ।
गायत्र इत्याहुः ।
15 समाप्तेषु भागेषु पुनरुपक्रमे कोऽन्यो[11] गायत्र[12]वान् स्यादिति ।
सर्वभाग इत्याहुः ।
सर्वभागं पृष्ठं ह्यत्र रथन्तरमिति ।
आनुष्टुभ इत्यपरम्, राज्ञानुबन्धतयेति ।
क्रमे भवती३ समास इति ।
20 क्रमे भवतीत्याहुः ।
समस्तेऽक्षरे रात्रिपर्यायाः क्रमे सन्धिरिति[13] ।
अपि वा क्रमे रात्रिपर्यायाः समस्तेऽक्षरे सन्धिरिति ।
नैते[14]दिह विज्ञायत इति शाण्डि[15]ल्यायनः ।
अमुत्र खल्वेतद् दे[16]शरात्रे विज्ञायते ।
25 इदं पदस्य स्थानमिदमक्षरक्रमस्येदं वृद्धेरिदं समासस्येति ।
तत्रै[17] हि द्विर्भागाः प्रकल्प[18]यन्त इति विज्ञायत एवेति ।
वाजो[19]ः पदस्थान्यहःसवनानि क्रमे, षोडशी तमप्यभिविहारं स्व[20]संति ।

1 शौवाजिरेयः B. 2 परो is wanting in G1, G2, J. 3 त is wanting in G1, G2. 4 ०त्याये G1, G2, J. 5 ०क्षः G1, G2, J. 6 भवति B. 7 ०प्यास्यास्या G1; ०प्या० G2, J. 8 त G1, G2, J. 9 B omits up to p. 50. 17. 10 ०कानि G1. 11 कोत्या G1, G2, J. 12 ०त्र G1, G2; ०त्रत्स्या० J; ०त्रः K. 13 रि is wanting in G1, G2, J. 14 ०दिहर्वि० C. 15 ०ल्योनः G1, G2, J. 16 ०तदेश० G1, G2, J. 17 तर्हि for तत्र हि in G1, G2, J. 18 ०ल्पन्त J, K. 19 वाज्यः पदः स्थान्यहः स च भानि क्र० G1; वाज्यः पदः स्थान्यहः सव० G2, J, K. 20 स्व० is wanting in J.

एतमे[1]वोत्तरक्रममनुचिख्यापयिषन् वृद्धौ रात्रिपर्याय[2]स्थानमप्यभ्यस्यति।
"अभ्याघात्य[3]सामानो हि छन्दोमाः" इति। *PB. 14. 9. 30.*
तदप्युभयोः सन्ध्योः सतोरेतमेव सन्धिरित्याचक्षते समासादिति।
एतेन[4] सर्वैकाहेषु सामभागा व्याख्याताः ॥ ५ ॥

5 अथ दशरात्रे कथं भागा इति।
यार्था[5]कामी भागानामित्येके[6] आहुः।
अ[7]स्त्येवैकभाग्यमस्ति सर्वभाग्यम्।
अपितु त्र्यहःश एव भागा स्युः।
गायत्रः प्रथमक[8]ल्पोऽहः।
10 त्रैष्टुभो द्वितीयः।
जागतस्तृतीयः।
आ[10]नुष्टुभः षोडशी।
आनुष्टुभं दशमम्[11]।
तदप्ये[12]वमिव ब्राह्मणं भवति—"प्रातःसव[13]नेनैव प्रथ[14]मस्त्रिरात्रैः[15] कल्पते।
15 माध्यन्दिनेन सव[16]नेन द्वितीयः,[17]" तृतीयसवनेन तृतीयः, अग्निष्टोमेन साम्नैव दशममहः।" इति। PB. 10. 5. 11.
अथापरं गायत्रं] [18]त्रैष्टुभं जागतमिति प्रथमस्त्र्यहः, एवमेव द्वितीयं[19] एवं तृतीयं[20]।
आ[21]नुष्टुभः षोडशी।
20 आनुष्टुभं दशमम्।
अथापरं गायत्रं त्रैष्टुभं जागतमिति प्रथमस्त्र्य[22]हः।
आनुष्टुभो द्वितीयः[23]।
गा[24]यत्रं त्रैष्टुभं जागतमिति तृतीयः।
आ[25]नुष्टुभः षोडशी।
25 आनुष्टुभं दशमम्।

---

1 एतम० G1, G2, J; एवमे० K. 2 ०र्यायास्तानप्य० C; ०र्यारथानप्य० G1, G2, J; ०र्याया० K. 3 ०त्ययसा० G1, G2, J, K. 4 अनेन K. 5 याथोकामी G1, G2, J. 6 क is wanting in G1, G2, J. 7 अस्तोरे० G1, G3, J, K. 8 ०कल्पम० G1; ०कल्प्य G2. 9 ०त्र्यहः G1, G3, J. 10 अनु० J. 11 ०मं G1, G3. 12 ०प्येवमिव G1, G2, J, K. 13 ०सवं० G1. 14 थ is wanting in G1, G2, J. 15 ०त्रः। द० G1, G2. 16 Omitted by J. 17 तृतीयः J, K 18 B resumes from here ( see p. 49 line 8 ). 19 ०या G1, G2, J, K. 20 ०या G1. 21 अनु० J. 22 ०त्र्यो० B. 23 ०यम् B. 24 गः य० G1, G2, J. 25 अनुष्टुभ G1, G2, J.

अथापरं गायत्रं त्रैष्टुभं जागतमानुष्टुभमिति प्रथमश्चतुरहः।
एवमेव छन्दोमचतुरहो वहिर्भागे[1] पञ्चमेषष्ठ इति।
अथापरं पदस्थः प्रथमस्त्र्यहः, अन्तरस्थो[2] द्वितीयः, वृद्धस्तृतीयः[3]।
आनुष्टुभः पोडशी।
5 आनुष्टुभं दशमम्[4]।
ते खलु शश्वद् भाल्लविनो भक्षानुव्यूहन्ति।
जगती प्रातःसवनं[5] आगमत्।
तत्र जगच्छन्दसा[6] भक्षयिष्याम इति।
न वयमनुव्यूहामः[7]।
10 सवनभक्तिशात्रा एव भक्षेषु स्मं[8] इति।
अथ संवत्सरे चतुर्विंशं लुसंभागमिति[9] शौचिवृक्षिः।
गायत्रं वा स्तोमशात्रेण, त्रैष्टुभं वा स्थानेन, सर्वभागं वैकाह्यात्[10][11]।
अथाभिप्लवा ऐकाहिका[12] वा स्तोमशात्रेण पाडहिका[13] वा तन्त्रशात्रेण।
त्र्यहभागात्स्वरसाम्नामानुष्टुभो विषुवांश्चातुर्थ्यात्[14] सर्वभागो वैकाह्यात्[15]॥६॥

15 अथाहीनेषु द्विरात्राणां गायत्रं पूर्वमहः।
त्रिभागमुत्तरं यत्प्राग् ब्रह्मसाम्नस्तत्[16] त्रैष्टुभम्।
ब्रह्मसामप्रभृति जागतम्।
आपोडशिनः पोडशिप्रभृति[17] परमानुष्टुभम्।
त्रिरात्राणां गायत्रं प्रथममहः, जागतं द्वितीयम्, त्रैष्टुभं तृतीयम्[18]।
20 आपोडशिनः पोडशिप्रभृति परमानुष्टुभम्।[19]
वैदत्रिरात्रे[20] सर्वभागान्यहानि।
चतूरात्राणां गायत्रं त्रैष्टुभं जागतमिति त्र्यहः।
अक्षराक्षरे[21] चतुर्थमिति शौचिवृक्षिः।
समस्तेऽक्षर[22] इति गौतमः।[23]
25 पञ्चरात्रेष्वक्षराक्षरयोरेव चतुर्थपञ्चम इति शौचिवृक्षिः।[23]

1 ०भागं C, G1, G2, J, K. 2 ०म इत्ये ष० G1, G2, J; ०म इत्य ष० K. 3 अतस्थो B. 4 वृद्धिस्थस्तृ० C, G1, G2, J, K. 5 ०नमागमं C; ०ने मागमं G1, G2, J; ०नं मागमद् K. 6 जागतच्छ० C; जागतं छ० G1, G2; जगतं छ० J. 7 ०व्यु० G1, G2, J. 8 सम B. 9 सुब० B. 10 ०भ्य० C, G1, G2, J, K. 11 वैकाह्यादिति C, G2, J, K; वैत्यकाह्यादिति G1. 12 ऐक G1, एके G2, J, K. 13 षोडाहिका B; षाडाहिंका G1, G2; ¯डहिंका J. 14 ०र्था G1, G2, J, K. 15 ०ह्यादिति C, G1, G2, J, K. 16 B omits तद्. 17 ०शिनप्र० G1, G2, J, K. 18 Wanting in G1, G2, J. 19 B repeats it; wanting in J. 20 ०ति० B. 21 अरक्षराक्षरे G1, G2, J, K. 22 ०स्ये० B. 23 G1 omits it.

समस्तेऽन्तर इत्येव गौतमः ।
पञ्चरात्रप्रभृतिषु दाशरात्रिका भागा यावद्यावदभिप्रापुयुः ।
अथ यत्राहीन एकाहैर्वर्तेत सर्वभागास्तत्रैकाहाः स्युरित्येके ।
आहीनिका भागा यथास्थानमित्यपरम् ।
5 एतेनाहीनेषूपधीयमाना व्याख्याताः ।
अथ ये ऊर्ध्वं दशरात्रादुपधीयेरन् ये वा मध्ये दशरात्रस्य भागपर्वणि सर्वभागा एव ते स्युः ।
एतेन सत्रेषूपधीयमाना व्याख्याताः ।
अहीनैकाहसमासा ह्येव सत्राणि भवन्ति ॥ ७ ॥

10 अथ सुब्रह्मण्यायां विचारयति—
ऋग्नु खल्वियं भवती३ सामेति ।
ऋग्भवतीत्याहुः ।
ऋच इवास्या नामधेयं सुब्रह्मण्येति ।
सामेत्यपरम् ।
15 गीतं हि भवति ।
अथाप्याहुः—मन्त्र एव खल्वेयं शिथिलो भवति, आह्वानार्थस्तस्येयंम्भ्या इयं स्यादिति (?) ।
अथाप्याहुः—नैवेयमृङ् न साम सुब्रह्मैवेदमिति ।
ब्रह्मणो भवती३ उद्गातुरिति ।
20 ब्रह्मणो भवतीत्याहुः ।
एतेन ह्यग्रे संयुज्यते ।
अथापि ब्रह्मा सुब्रह्मण्य इति नामधेयसारूप्यात् ।
अथोऽप्येव सर्वा अहोरात्रा वषट्कारिण्यो भवन्ति ।
उद्गातुर्ह्याग्नीध्रः सम्पद्यत इति ।
25 उद्गातुरित्यपरम् ।

---

1 दश० G1, G2, J, K. 2 B adds वा. 3 यथा० B. 4 योऽहीन B. 5 सर्वे भागाः । सत्रै० G1, G2; सर्वं भागाः सत्रै० J; सभा० K. 6 ०क C, G1, G2, J, K. 7 B reads अत for अथ ये. 8 अहैनै० G1, G2, J. 9 ०मासो B, G1, G2, J, K. 10 ह is wanting in C. 11 ऋगु C; ऋगु G1, G2, J. 12 ०ति B. 13 इत्यृ० B. 14 ह is wanting in G2. 15 खल्वियं B. 16 ०ह्वार्थ० B. 17 ०स्येयनम्भ्यां यिव२० C; ०स्येमम्भ्यायिव२ सा स्या० G1; ०स्येमम्भ्यायिव२ सा स्या० G2, J; ०स्येमम्भ्यामिव-सा स्या० K. 18 ०ह्म० B. 19 ०ति B. 20 मायधेय० G1, G2. 21 अथाप्येव G1, G2; अथाप्येवा स० J. 22 होत्रा B. 23 ०र० C. 24 ०न्ति G1, G2.

गीतकारी हि[1] भवति ।
[सै][2] यदभैदाः[3] पुरा ह्यभदेभ्यः[4] कर्मापैत्रृज्यत[5] इति ।
अथैर्नानागतत्वात्[6] कालादहीनेषु सत्रेषु याजमानात् "नामग्राहः किमर्थः"
इति । Arṣ. K. V. 7a.
5 उच्चावचचरणाः स्त्रियो भवन्ति ।
स इद्दं[7] देवसादये च मनुष्यसादये च येषां पुत्रो वदयेते[8], तेषामेव पुत्रो भविष्यामि, यांश्च पुत्रान् वक्ष्यैति[11] ते मे पुत्रा भविष्यन्तीति[12] शाकटी-मन्ववरुह्याह्वयेद्रां[13]ह्णोऽप्रत्यारोहायाप्रत्यारोहाय ॥ ८ ॥

अष्टमः[14] पटलः

10 अथातो दशरात्रः ।
तस्य ब्राह्मणेनैव द्रव्यसमुद्देश उक्तः ।
यानि चैतानि ज्योतिष्टो[15]मानि द्रव्यलक्षणानि[16] ।
यानि च पृष्ठैः समानै[17]रूपाणि ।
यानि च[18] दशरात्रेण[19] समानसङ्ख्यानि ।
15 यथैतत् प्रथमानि[20] प्रथमे[21] द्वितीयानि द्वितीय इति ।
स्थानतो[22]ऽसमान[23]सङ्ख्य[24] सम्पश्येत् ।
अथैताः सप्त नाम[25]विभक्तयः—
स तं तेन तस्मै तस्मात् तस्य तस्मिन्निति ।
आमन्त्रिताऽष्टमी ।
20 स खलु विभक्तिमामन्त्रितां प्रथमेऽहनि करोति ।
कस्य हेतोरिति ।
प्रत्यक्षवि[26]भक्ति रथन्तरम् ।
आमन्त्रितस्य न परोक्षमस्तीति ।
[अथाप्येषा प्रथमा[27]ग्निमन्थनीया भवति, तां चतुर्थेऽहनि करिष्यन् भवति ।[28]

---

1 ह C, G1, G2, J, K. 2 Wanting in B. 3 ०भक्षेभ्यः C; ०भक्ताः G1, G2, J; ०भक्षाः K. 4 स्व भ० C, G1, G2, J, K. 5 कर्म प्रवृ० C; कर्मा-वृ० J, K. 6 अतिनागतत्वात् B; अथैतानाग० C. 7 G1 adds स. J. 8 ह G1, G2. 9 वक्ष्येते B; वक्ष्यते, तेषामेव पुत्रो is omitted by C. 10 यंश्च० G1. 11 वक्ष्ये C; वक्ष्ये J, K. 12 ०ष्यतीति G1, G2, J, K. 13 ०ह्णा प्र० B. 14 In B only. 15 ज्यो० C. 16 द्रव्याणि C. 17 न is wanting in G1, G2, J. 18 चतुर्द० G1, G2. 19 दशारेण B; ०शरात्रे J; ०रात्रे K. 20 प्रायत्मानि G1, G2, J. 21 प्रथमद्वि० C, G1, G2, J, K. 22 G1, G2, J add सख्य. 23 ०तोऽपि स० C, 3, K. 24 ०न० द्रव्य०सम्प० C; ०न० सम्प० G1, G2, J, K. 25 म is wanting in B. 26 वि is wanting in B, C. 27 प्रथिमा० G1, G2, J. 28 Wanting in B upto p. 54. 17.

तनिति द्वितीया, तां द्वितीये ।
तेनेति[1] तृतीया, तां तृतीये ।
तस्मा इति चतुर्थी, तस्यां न द्रव्यं निधनमनाहुः ।
यस्मानुदाहरन्ति—
5 'प्र तव्यसीं नव्यसीं धीतिमग्नये' इति ।
RV. 1. 143. 1.
सैषा प्रतर्वती भवति भागान्तेऽपरूपा ।
स इति प्रथमा, तां चतुर्थेऽहनि करोति ।
कस्य हेतोरिति ।
10 प्रत्यय एव भागानां प्रत्यय एव विभक्तीनाम्[6] ।
प्रत्यये प्रत्ययम् ।
अथापि नानधान्येषा भवति ।
एतस्मिन्नहन्यग्निं जनयन्ति ।
जातस्यो नाम[7] धीयत इति ।
15 तस्य ब्राह्मणं भवति—"देवा[8] वै धियमैच्छंस्तां प्रथमेऽहन्यविन्दन्न[9][10] द्वितीये न तृतीये, तां चतुर्थेऽहन्यविन्दन्[11]" इति । PB. 10. 7. 2.
एतां[12] धियमाह—
नामधेयं[13] ह विभक्तयः श्रिता भवन्तीति[14] ।]
अथाप्येषा[15] द्विसंख्याता पञ्चमेऽहनि भवति ।
20 तस्येति वा तस्मादिति[16] वा ।
तस्मादिति भवतीति गौतमः ।
तां[17] ऋग्वेदके चतुर्थी[18] ब्रुवते ।
तां ततो नानधान्या प्रत्युतानन्तरस्मिन्नहन्यनुगृह्णाति[19] ।
तदुभयेनेव[20] ब्राह्मणं भवति[21]—"तेनो[22] धीः प्रत्युपादितेति" । PB. 10.
25 7. 2.

---

1 ते is wanting in G1. 2 Omitted by G1, G2. 3 Wanting in G1, G2. 4 तस्मा G1, G2. 5 नव्यसीं G1, G2, J, K. 6 प्रत्यय … विभक्तीनाम् wanting in J. 7 नम G1, G2; नामन J; नाम K. 8 देवा J. 9 ॰निच्छंस्तान्य G1, G2, K, J. 10 ॰विदन्नविदश्च K. 11 ॰न्य हन्य विद॰ G1, G2. 12 ॰ते G1, G2, J, K. 13 ॰क्तिः G1, G2, J, K. 14 ॰न्तीति G1, G2, J, K. 15 B resumes from here (see p. 53. 24); G1, G2, J, K omit भवन्तीति … तस्मादिति (line 20). 16 तस्मादिति वा is omitted by C. 17 तार् स्विदके B. 18 चतुर्थं B, G2, J. 19 ॰तानन्तरा॰ C. 20 तदुभयेनेव G1. 21 ॰न्तीति K. 22 तेना B, G1, G2.

ब्रह्मण आज्ये निरुच्यते—
'इन्द्रात्परितन्वं ममे' इति। SV. 2. 340; RV. 8. 76. 12.
तस्येति भवतीति धानञ्जय्यः।
सा षष्ठी, तामामन्त्रितया प्रच्युतामनुगृह्णाति।
5 अथाप्येतयोः पूर्वयोस्तृतीयया समानं द्विवचनम्।
स तयैवं ते उपात्ते अमंस्त—
अपि वा प्रत्यवरोहार्थं एवाकरिष्यत्।
समूढाज्ये निरुच्यते।
'अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः।
10 देवस्य द्रविणस्यवः॥' SV. 2. 755. RV. 5. 13. 2; MS. 4. 10. 2: 145. 12; KS. 20. 14.
इत्यभविष्यदिति।
अथापि व्यूढाज्य एव भवति।
'तव श्रियो वर्ष्यस्येव विद्युतः' इति। SV. 2. 332. RV. 10. 91. 5;
15 PB. 13. 2. 1.
त्वेच्छ्रिय इत्यभविष्यदिति।
आमन्त्रितैव षष्ठे भवति।
एवमाद्यवसानसमाधिरिति॥ ९॥

"अथैषा स्वरविभक्तिः—औशनं प्रथमे, वासिष्ठं द्वितीये, उभयतः स्तोभं
20 गौतमं तृतीये, आभीशवं चतुर्थे, आनूपं पञ्चमे, इहवद्वामदेव्यं षष्ठे।
अथैषा निधनविभक्तिः—नौधसं प्रथमे, श्यैतं द्वितीये, महावैष्टम्भं तृतीये, आथर्वणं चतुर्थे, बार्हद्गिरं पञ्चमे, गोष्ठः षष्ठे।
अथैषैडाविभक्तिः—कालेयं प्रथमे, माधुच्छन्दसं द्वितीये, रौरवं तृतीये,

1 नवै म्रा० C क. 2 न G1, G2, J. 3 ममेति। B. 4 J, K add तस्मादिति ०स्यैति G1, G2, J. 5 तायै० G1, G2, J. 6 ०त्ते B. 7 समूढाज्योतिनि० G1, G2, J. 8 अग्ने G1, G2, J. 9 य इति विणस्य व G1, G2, J. 10 वि is wanting in G1, G2 11 न्वच्छ्रियत C. 12 ०न्यचैवं G1, G2; ०न्त्रितैवं J. 13 एवामा० G1, G2. 14 ०रभ० B. 15 औपनं G1, G2, J. 16 स्तोमं J. 17 आन्वयं G1, G2, J. 18 ०नभक्तिः B; ०नविभक्ति G1, G2, J. 19 श्येनं B, J. 20 बार्ह० G1, G2. 21 गौ० G2. 22 अथैषेडा C, J; अथेषेडा K. 23 ०डाभक्तिः B. 24 माधव० J. 25 ०च्छ० G1, G2, J.

पृश्नि चतुर्थे, रायोवाजीयं पञ्चमे, गोष्ठ एव षष्ठे।" Agni. LŚ. 4. 5. 18.

अथैषे[1] छन्दोमेष्विडाविभक्तिः[2]—

जराबोधीयं[2] सप्तमे।

इडानां[3] सञ्चारोऽष्टमस्य सती नवमेऽहनि[4] क्रियते।

5 प्रतीचेनेडं[5] काशीतं नवमे।

उत्सेधो[6] दशमे[7]।

अथ नौधसे वदति[8]—

'इन्द्रं गीर्भिर्हवामहे'[9] इति। RV. 8. 76. 5; PB. 11. 4. 4.

तत्खलु हवामह इत्येव कर्तव्यम्।

10 विधिः[10] प्रमाणात्[11]।

कथमयथाविधि कुर्यामेति।

आम्नायद्वैतेन ब्राह्मणमुपवर्णयतीत्यपरम्[12]।

तन्नियोगाय न प्रभवतीति।

एतेनैतद्[13] व्याख्यातम्—

15 'अक्रान्त्समुद्रः परमे[14] विधर्मन्'[15] इति। SV. 1. 529; 2. 603; RV. 9. 17. 40; PB. 15. 1. 1.

यानि चैवंजातीयानि—

यथाक्षारे[16] वदति—

"यः पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्यादाक्षारं ब्रह्मसाम कुर्वीत"

20 इति। PB. 11. 5. 11; LŚ. 10. 1. 13.

किं तस्य स्थाने स्यादिति।

एते एवान्योन्यस्य स्थानं व्यतिहरेत्।

नौधसमुष्णिहि कुर्यादिति।

तदाहुः—व्यतिहरति चेद्यत्र बृहत्षोडशिसाम[18] स्याद् गौरीवितं नूनं

25 द्वितीयस्याह्नः पृष्ठं कुर्यादिति।

अथ वै सञ्चारयेदिति[19]।

---

1 ०षां G. 2 ०डाम० B; ०विक्के G1, G2, J. 3 इन्यानार० G1, G2; इन्दनार० J. 4 G1, G2, J add क्रिय इनि. 5 ०नैडं G1. 6 उत्सोधो G1, G2; उत्सोषो J. 7 ०नः G1, G2, J, K. 8 वदन्ती G1, G2, J, K. 9 ई गी० G1, J; इंन्द्र गी० G2. 10 विधिः प्र० G1, G2, J. 11 ०णाः C, G1, G2, J, K. 12 G1, G2, J omit व. 13 ०नैव G1, G2, J, K. 14 मघने SV, RV but PB has परमे. 15 ०र्न्निवि. G1, G2, J, K. 16 ०क्षरे G1, G2. 17 वा० C ख, G1, G2, J, K. 18 सामा G1, G2, J. 19 ०येति G1, G2, J, K.

सञ्चारयति चेद्गौरीवितमेवानुष्टुभि कुर्यात्, गौरीवितꣳ षोडशिसामेति[1] ।
अथ वै प्रतिनिदध्यादिति[2] ।
प्रतिनिदधाति चेद्[3]यत्र बृहत्षोडशिसाम स्यात्, किं तत्र बृहत्सदृशं द्विती-
यस्याह्नः पृष्ठं कुर्यादिति ।
5 अथ कथꣳ स्यादिति ।
सञ्चा[4]रयेदहः ।
नानाह्वः[5]सु यानि सञ्चारि[6]धर्माणि स्युः प्रतिनिदध्यात् ।
समानेऽहनि व्यतिहरेत्, यत्र व्यतिहारमभिरूपं मन्येत ।
प्रतिनिधिष्विहा[7]भिरूपतरम्[8] ।
10 पौष्कलमुष्णिहि[9] कुर्यात् ।
एतच्च ज्यो[10]तिष्टोमा[11]नां द्र[12]व्याणां दशरात्रे निहितं भवति ।
अपिच पदनिधनꣳ राथन्तरेऽहनीति ।
यज्ञायज्ञीय[13]मग्निष्टोमसाम, यज्ञे यज्ञे कुरुतेति ।
तदेवाभिवदति ।
15 अथाप्येष तृतीयसवने[14] सामान्तस्तमदी[15]देशयिषीत् ॥ १० ॥
"अथ वैरूपे वदति—
'यथा मण्डूक आद् करोत्येवं निधनमुपयन्ति' इति । PB. 12. 4. 16.
कस्येदं ब्राह्मणꣳ स्यादिति ।
कृता राथन्तरीडा[16] कृता बार्हतीति कौत्सः ।
20 तदिदमकृतकारं ब्राह्मणमर्द्धडा[17]ब्राह्मणꣳ स्यादिति ।
पञ्चमे सेयं[18] प्रत्याहृता भवतीति गौतमः ।
तां परोक्षी[19]कृत्याभिव्या[20]हरेयुः ।
एवं पञ्चमेऽहन्ययातयामा भवतीति ।
तदप्येवं[21]मिव ब्राह्मणं भवति—'अयातयामतायै' इति । cp. PB. 12.
25                                                                4. 16.

1 ०समेति० G1, G2; ०सनेति J. 2 ०त्रिति G1. 3 च० G1, G2, J, त० K. 4 चारये (ति सञ्चारयति चेद्गौरीवितमेवानुष्टुभि कुर्याद्गौरीवितꣳ षोडशिसमेति । अथ वै प्रतिनिदध्या किं) दह G1; वारयेदह G2, J. 5 ०ह्वास्तु C. 6 ०धर्मिणि B. 7 ०निधिस्त्विहा० C; निस्त्रिधिहा० G1, G2, J; ०निध्विस्त्विहा० K. 8 ०तरः C, G1, G2, J, K. 9 हि is wanting in G1, G2. 10 ज्यौ० C. 11 B adds अत्र. 12 हव्याणां G1. 13 ०ह्योनिम० G1, G2. 14 ०सवनꣳ सा० C; ०सवनसा० B, K. 15 ०मदी० B. 16 ०रीडाः G1, G2, J. 17 ०णार्द्धसाम्रा० B. 18 ०देयं C, G1, G2, J, K. 19 ०त्तत्त० G1, G2, J. 20 ०व्याहृ० G1, G2, J, K. 21 ०प्येतमि० B; ०वम Caland.

तत्र कः परोक्षीभाव इति ।
आकारटंकारौ[1] वा कुर्युरिकारेकारौ[2] वा ।
एवमेकवर्णविकारैः[3] ।
इकारन्त्वेवौयिकारीकुर्युः[4] ।
5 एतस्मिन् परोक्षीभाव उपलभ्यत इति ।" Caland ibid.
एदैदैवतं[5] व्यत्यस्यति[6] ।
वैरूपे विरूपं[7]मचिकीर्षत् ।
अवरमेवेदमहः[8] सत् परमत्यस्तं[9] भवतीत्यपरम् ।
व्यत्यासे व्यत्यासं करिष्यामीति, स्तोत्रवशेनेति धानञ्जय्यः ।
10 यदि[10]व्यत्यस्यन् एंदैदैवतम्[11] ।
एदा यत्प्रत्याहारयिष्यदिति[12] प्रत्यवेतैस्तदा[13] प्रतिहारोऽभविष्यत् ।
यद्यु[14] वै देवतायै वहिर्ऋचं प्रतिहारो[15]ऽभविष्यत् ।
अथैत्थं[16]मनतिप्रत्याहृतो[17]ऽन्तर्ऋचं भवतीति ।
अथाप्यस्यै[18] छान्दसमध्यायं[19] विद्यमानमाहुः ।
15 "अथ[20] खल्वाह—'द्वादश वैरूपाणि भवन्ति ।' इति । PB. 12. 4. 17.
कस्येदं ब्राह्मणं स्या[21]दिति ।
संवत्सरब्राह्मणमित्याहुः ।
संवत्सरे द्वादशकृत्वो होतृषाम भवति ।" Caland ibid.
तस्येदं[21] संवत्सरासि वदेदिति ॥ ११ ॥

20 अथ[22] प्रथमं[23] हिष्टीये वदति ।
हिंसितो[24]ऽन्वीक्षेत, यमिच्छेत् प्रयुज्यमानं ने प्रत्येयादिति ।
तं[25]मनुगायेद् दक्षिण[26]मक्ति निकुब्य सव्यं सक्थि [उद्[27]]गृह्य[28] ।

---

1 ०रगकारौ B; ०र्ऽकारौ G1, G2, J. K. 2 ०र्युकारणकारौ G1, G2; ०रिकारणकारौ J, K. 3 ०रन्त्वे० G1, G2, J. 4 ०वारका० B, K; ०वार्यका० G1, G2, J. 5 पदादेवतं G1, G2, J. 6 स्यति is wanting in G1, G2. 7 B, K repeat रूप. 8 अपर० B; एवरामवेदमभ्यहः G1, G2; एवरामवेदमहः J. 9 परमभ्यस्तं C, K; परामभ्यस्तं G1, G2, J. 10 यदि भ्यत्यस्मिन् B. 11 पदं दैवतान् B; यद० C. 12 ०ष्यदत्ति C, G1, G2, J, K. 13 ०वेतह्यथा C, G2, J, K; ०चेतस्था G1. 14 अद्य B. 15 प्रतिभवि० G1, G2, J. 16 अत्थमनत० G1, G2; अत्थमनति० J. 17 ०हृतोर्ऋचं G1, G2, J; ०हृतोन्तर्ऋचं K. 18 ०स्यैवं छा० C, G1, G2, J, K. 19 ०मधसयं J. 20 अप्यथ C. 21 स्यादिति ... तस्येदं (line 19) is omitted by G1, G2, J. 22 अत्र B. 23 प्रदन० B; प्रथमं ये हिष्टी G1, G2, J. 24 Wanting in G1, G2, J, K. 25 ताम० G1. 26 दक्षिणमन्विति कुत्य सव्यं C; दक्षिति कुत्य सव्यं G1, G2, J. 27 उद् is omitted by B; द् is wanting in G1, G2, J, K. 28 ०गृह्य C.

अथा[1]यं न प्रत्येयादिति काकुभ उक्थ[2]प्रणयः पृष्ठच्छन्द[3]सोऽन्वभिवृद्धिः।
"अथ स्वःपृष्ठस्याङ्गिरसस्य निधनयोरानुपूर्व्ये विवदन्ते।
स्वः[4]पूर्वमिडोत्तरेत्येके।
एवमेतयोः सामन्त[5]योरा[6]नुपूर्व्य[7] भवति।
5 इडां वयं पूर्वां कु[8]र्मः।
एवमनयोः समानोपायादभिव्याहारं पश्यामः।
यथा[9] राज[10]ने माधुच्छन्दस इति।" Caland PB. 12. 9. 19.
अथ वैराजं ऽयनु[11]तोदमेके कुर्वन्ति।
एवं[12] छान्दसोऽध्याय इति।
10 चतुरनुतोदं वयम्।
एवमा[13]चार्यवच इति।
'तेन[14] वात्सप्र[15]समादध्यात्।' Dh. Dr. Ś. 40 b. 13.
"यदीदं ऽयनु[16]तोद[17] [ स्यात्[18] ऽयनुतोदं ] तत्।
यदि[19] चतुरनु[20]तोदं चतुरनु[21]तोदं तत्।" cp. Dh. Dr. Ś. 40 b. 13;
15　　　　41 a. 1.
तदप्येवमिव ब्राह्मणं भवति—एतस्मिन् वै वैरा[22]जं प्रतिष्ठितमिति।
अथ कतमे विष्टम्भा इति। cp. PB. 12. 10. 10.
देवता इत्याहुः।
देवताभिः पदानि विष्टब्धा[23]नीति।
20 तदाहुः—एकादशेमा[24] देवता दशकृत्वो विष्टभ्नोतीति।
दशैताः सप्रा[25]या भवन्ति।
अपि वा[26] य एते देवतान्तरेषु पदे[27]वत्स्तोभास्तान् विष्टम्भानवोचत।
तैर्देवता विष्टब्धा इति।

---

1 अथा० G1, G2, J, K. 2 उक्थः प्र० C, G1, G2, J, उक्थ्यः प्र० K 3 ०च्छन्दोऽन्व० C, प्र (पृ G2, J) छन्दोन्व० G1, G2, J, K. 4 स्वः is wanting in B. 5 ०न्तरयो० C, G1, G2, J. 6 ०रनु० G1, G2, J. 7 ०पूर्वं G1. 8 कूर्मः C, कुर्म्म J, K. 9 अथा G1, G2. 10 ०जा० G1, G2. 11 ०नुतदे० B; ०नुनोद० G1, G2. 12 वं is wanting in G1, G2. 13 एव इति मार्य० G1, G2; चा is wanting in J. 14 तन G1, G2, J. 15 वात्क प्र० G1. 16 ०तोतं B. 17 B, C omit the portion within brackets. 18 अनु० G1, G2, J, K. 19 यति G1, G3, J. 20 Wanting in C, K. 21 ०रा० G1, G2. 22 राजं C, G1, G2, J, K. 23 विष्टम्भानीति C; विष्टम्दानीति G1. 24 ०शमा G1, G2, J, K. 25 सत्यं प्रा० C, G1, G2, J, K. 26 ऽपावैर्दे० B. 27 दशस्तो० C, G1, G2, J, K.

अथैतयोरक्षरयोर्विवदन्ते ।
"ऋगक्षरे स्तोभाक्षरे" इति ।
ऋगक्षर इति लामकायनः ।
तदभिव्याहारेण जानीमः—यादृशे इमे ऋगक्षरे तादृशे इमे भवत
5 इति ।
अथाप्यादित्यसदृशं वैराजम् ।
यादृश इत आदित्यस्तादृशः परस्तात् ।
तद्रूपं दिदर्शयिषन् प्रथमे ऋगक्षरेऽन्त्याक्षरं परिहरति ।
अथाप्युच्चावचाः सामवृत्तयो भवन्ति ।
10 यथैतत् साम्न्युपेतानि पुनरन्धादीनि[12] ।
तन्न्यायं मन्यन्ते ।
स्तोभाक्षर इति धानञ्जय्यः ।
पश्यामः खलु पदानुरूपान् स्तोभानृचोऽन्वयतः ।
यथैतज्जनद्वत्यामृचि जनद्वान् स्तोभोऽपि[18] ।
15 सिद्धमतो हि स्तोमेषु ।
एवमिमे पीतवत्यामृचि पीतवती स्तोभाक्षरे भवत इति ।
अथाप्यादित्यसदृशं वैराजम् ।
यादृश इत आदित्यस्तादृशः परस्तात् ।
तद्रूपं दिदर्शयिषन् पदानुरूपे स्तोभाक्षरेऽन्तं परिहरति ।
20 नो एतत् कंचन पश्यामः ।
प्रथमे ऋगक्षरेऽन्तं परिह्रियमाण इति ।
अथैषातिजगती भावप्रत्यये छन्दस्तोमैरोहमदिदर्शयिषीत् ।
विराजं वा वैराजेऽहन्यचिकीर्षीत्[28] ।

1 आथेत० J. 2 खेरा० J. 3 रूपं B. 4 ०यिष्यन् B, G1, G2. 5 ०रे अन्तं प० C; ०रे अन्नं प० G1, G2, J, K. 6 अथायस्था०.G1, G2; अथापरथा० K. 7 समावृ० B. 8 ०चोयो G1, G2, J, K. 9 ०थैकवत् C. 10 साम्युपे० C; साम्नुपे० G1, G2, K; साभ्यूपे० J. 11 पुनरा० C. 12 ०धानीति C, G1, G2, J, K. 13 नान्यां C; नान्यायं G1, G2, J, K. 14 मन्येत C, G1, G2, J, K. 15 पश्यामेः G1, G2, J. 16 ०चोन्यवयन्तः C, G1, G2, J, K. 17 ०द० J. 18 ०भोऽअसिद्धवतोऽपि रा० C; ०भ्योव (०भोप G2, J) सिद्धवन्तोऽपि रा० G1, G2, J. 19 ०शां G1, G2, J, K. 20 ०दृशे B. 21 ०यिषीत् B; दिदिदशयिन् G1, G2, J. 22 यदा० C, G1, G2. 23 ०न्तरं B. 24 ०त क्वच G1, G2, J; ०तद्वचनं K. 25 ०भागप्रत्यये B; भागप्रत्यये K. 26 म is wanting in B, J, K. 27 ०दर्शयिशेषीत् J. 28 ०कीषत् B, G1, G2, J.

वि[1]राडियं पञ्चाश[2]दक्षरा, बृहत्यावुत्तरे, तेन बृहतीभ्योऽनपेतं भवती-
त्य[3]नपेतं भवतीति ॥ १२ ॥

नवमः[4] पटलः

अथैतासु महानाम्नी[5]षु विप्रतिपादयन्ति[6]—
5 इ[7]दं शाकरमिदमशाकरमिति ।
अशा[8]करी प्रथमा द्विपदा, शाकराणि त्रीणि पराणि पदानि ।
धातुरशाकरः पञ्चाक्षरः ।
स एष कृताकृतो भवति ।
वत्सोऽशाकरोऽष्टाक्षरः ।
10 [ ऊधः[9] ] शाकरमष्टाक्षरम् ।
अभ्यासवत् तस्य[10] द्व्यक्षरान् प[11]दादीन् प्रतिनोदा[12] इत्याचक्षते ।[13]
पुरुषोऽशाकरः पञ्चाक्षरः, शाकराण्येव त्रीणि परा[14]णि पदानि ।
अभ्यासोऽशाकरोऽष्टाक्षरः ।" Say. PB. 13. 4. 2.
तस्य प्रस्तावय[15]ति, न प्रतिहारयति[16] ।
15 एतेनैवोत्तर[17]योः शाकरा[18]णि चाशाकराणि [च[19]] व्याख्याता[20]नि ।
द्व्यभ्यासोत्तमा[21] शक्क[22]री भवति ।
अभ्यासा[23]ः किमर्था इति ।
लोकोक्ताः श[24]क्कर्यः साभ्यासा इमे लोका भवन्ति ।
अग्निर्वायुरिति पूर्वयोः ।
20 आदित्यश्चन्द्रमा इत्युत्तर[25]स्य ।
तस्माद् द्व्यभ्यासोत्तमा शक्करी भवति ।
अथ खल्वाह—"ह्य[26]धोपशाः संस्तुता भवन्ति" इति । PB. 13. 4. 3.
कस्येदं ब्राह्मणं स्यादिति ।
उत्तमाया द्व्य[27]भ्यासाया इत्याहुः ।

---

1 विराजडियं G1, G2, J. 2 पञ्चादशद° B; पंचावराक्षरा G1; पञ्चादशक्षरा G2, J; पञ्चादशाक्षरा K. 3 °भवतीत्यमपेतं G1, G2, J. 4 In B only. 5 °म्नीसु G1, G2, J. 6 °न्ती C. 7 दशाक्षरमिदम° C. 8 श° B. 9 Wanting in B 10 तस्या G1. 11 पादा° C. 12 प्रतीतोदा C, G1, G2, J; प्रती° K. 13 S omits this line. 14 Wanting in C. 15 °तावयती K. 16 °हारयति K. 17 °रायो G1. 18 °रा G1, G2. 19 B omits च. 20 °ख्यानि G1, G2. 21 °भ्यासमा G1. 22 °शा° C, G2, J; साकरी G1. 23 °सा C; °सा॰ कि° G1, G2, J; °सं कि° K. 24 शा° C, G1, G2, J. 25 °रमस्य C, J, K. 26 ह्योपशाः C. 27 ह्या° G1.

एकाध्यासे पूर्वे[1] द्व्यध्यासोत्तमा ।
तस्यां[2] इदमभिनन्दं[3] ब्राह्मणं वदेदिति ।
अपि वा समस्तब्राह्मणमेव स्याद् ।
द्व्योपशे[4] पूर्वे[5] द्व्योर्पशोत्तमेति[6] ।
5 ऊधसोऽभ्यासब्राह्मणं मन्य इति वार्षगण्यः ।
एवमिव ब्राह्मणं भवति—"इडे[7]ऽभितोऽथकारं तस्माच्छृङ्गे तीक्ष्णीयसी[8] स्तूपात्[9] ।" इति । PB. 13. 4. 4.
उपशोकानि[10] शृङ्गाणि भवन्तीति ।
अथ खल्वाह—"दिशः[11] पञ्चपदा[12] दाधारैत्तून्[13] षट्पदा छन्दांसि[14] सप्तपदा
10 पुरुषं द्विपदौ[15]" इति । PB. 13. 4. 2.
"प्रतिलोमं वदन्ति[16] ।
पादतो[17]च्छिद्रोढो भविष्यतीति ।
सप्तपदा प्रथमा शक्करी, षट्पदा द्वितीया ।
यद्धि[18] प्रथमाया उत्तमं[19] पदं तद् द्वितीयायाः प्रथमम् ।
15 प्रगाथः सानु[20]पृष्ठ[21]मिति पञ्चपदोत्तमा ।
यद्[22] द्वितीयाया उत्तमं तत् तृतीयायाः[23] प्रथमं च द्वितीयं च ।" Say. ibid.
नवपदाः पुरा बभूवुरिति लामकायनः ।
ताभ्यो[24] रेवत्यो[25] निर्मिताः ।
20 द्वे प्रथमायाः पदे, त्रीणि द्वितीयायाः, चत्वारि तृतीयायाः ।
तदप्येवमिव ब्राह्मणं भवति—"सिमाभ्यो[26] ह्यधिरेवत्यः प्रजायन्ते ।" इति । PB. 13. 9. 4.
नवपदा एव भविष्यन्तीति, ऊधश्चाभ्यस्यति[27] पदं चानुसंहरति ।
अथापि नवपदा एवाभिरूपतरा[28] न विपर्याये[29] त्रिणव इति ॥ १२ ॥

---

1 पूर्वे द्यध्यासो is wanting in G1, G2. 2 तस्या G1, G2, J. 3 ०नन्दां B; ०नन्दा G1, G2, J, K. 4 Wanting in C; ०पदेशे G1, G2, J, K. 5 Wanting in C. 6 ०योप० C; द्योपदेशो० K. 7 इमडे० G1, G2. 8 ऽतितिष्णयसि B. 9 ०यात् C. 10 ०शौका० G1. 11 दश B. 12 पञ्चदा B. 13 दाधार is wanting in B. 14 ०दांऽस्ति C; ०दंऽसि G1. 15 ०पदेऽपि । G1, G2. 16 वदति Cक; भवति Cख, G1, G2, J, K. 17 वादत० G1, G2, J. 18 यादि G1; यादि G2, J, K. 19 वत्तमं पदं ··· द्वितीयाया ( line 16 ) is wanting in K. 20 साधु० B. G1, G2, J. 21 ०ष्ठा० G1, G2. 22 अय B; य G1, G2, J. 23 द्वितीयायाः B. 24 ताभ्या G1, G2, J. 25 ०वत्या G1, G2, J. 26 समा० B. 27 ०स्य C, G1, G2, K; स्यति is wanting in J. 28 ०रूप्यन्तदनरा G1, G2, पान्तदरा J. 29 ०र्यायोऽहिरूण० B; ०र्यायेति त्रि० G1, G2, J, K.

# अथ चतुर्थः प्रपाठकः

अथ खल्वाह—"गायत्रमयनं भवति, त्रैष्टुभमयनं भवति, जागतमयनं भवति[2] ।" cp. PB. 13. 4. 10

किमयनꣳ स्यादिति ।

ऊधसि विकारे दृष्टे[3] इति[4] गौतमधानञ्जय्यौ ।

5 [यें][1] ए[5]ष मध्य ऊधसोऽथकारस्तꣳ स्वरिति कुर्यात् ।

तद्गायत्रमयनम् ।

अथेति त्रैष्टुभम् ।

इडेति जागतम् ।

तदाहुः—विकृतौऽथकारः[7], अविकृतस्य को विकारः, यं[8] एवाभित इडे[9] ते विकुर्यादिति ।

10

सर्वमेवोर्ध्वं[10]विकारार्थमागच्छतीत्यपरम् ।

सर्वमेवोधर्विकुर्यादिति ।

अथाप्याहुः—अविकृतमेवोधः स्यात्, अन्त्येडा[11]मेव विकुं[12]र्यात्, अन्त्याख्यानि कर्माणीति ।

15 अथा[13]प्याहुः—अविकृतैवान्त्येडा स्यात्, यदेवं[14] प्रागन्त्येडायास्तद्विकुर्यात्, तद्ध्ययनं भवतीति ।

ते[15] कस्य हेतोर्जागतमयनꣳ समारप्स्यन्तीति[16] ।

नेदं[17] जागतमिति शाण्डिल्यायनः ।

---

1 In C only. 2 ॰नीति C, G1, G2, J, K. 3 दष्टम G1, G2, J. 4 ति is wanting in G1, G2. 5 Wanting in B. 6 ए is wanting in G1, G2, J. 7 ॰र्वितो यथाकारः G1, G2; वि॰तोपथोकोरः J. 8 ये चाभि॰ C; यो वाभि॰ G1, G2, J; ये वाभि॰ K. 9 ॰डेति वि॰ C, G1, G2. 10 ॰धुका॰ B. 11 अन्तेडा॰ G1, G2. 12 कुर्यांदन्ता॰ C; कुर्याकस्यदन्ता॰ G1, G2, J, K. 13 अथापार वि॰ G1; अथाप्यार वि॰ G2. 14 ॰वं G1, G2, J, K. 15 एकस्य हे॰ G1, G2, J, K. 16 ॰न्तेति C, G1, G2, J, K. 17 तदिदं B.

यानि त्वत्र[1] निधनानि तानि स्वरिति कुर्यात् ।
तद् गायत्रमयनम् ।
अथेति[2] त्रैष्टुभम् ।
इडेति जागतम् ।
5 अथेदं मिश्रनिधन[3] सर्वाभिप्रायम्—
यथेदमधीमह इति ।
ऊर्ध्व[4] शक्करीभ्यः पञ्च पुरीषपदानि पञ्चाक्षराणि, तेभ्यः प्रस्तावयति, न प्रतिहारयति, न शश्वदेकेऽध्यासपुरीषपदानां प्रस्तावयन्ति प्रतिहारो-[5]पायान् प्रस्तावोपेयादिति ।
10 प्रस्तावयामो वयम् ।
अन्यदिद[6] शक्करीभ्यः ।
तत्कथमप्रस्तुतं क्रियेतेति[7][8] ।
स[9]रोधात्तु नूनं प्रतिहारोपायात् ।
ते खल्विमे बहवः प्रस्तावाः ।
15 कथमोङ्कार इति ।
प्रस्तावनिमित्त ओङ्कार इत्येके ।
प्रस्तावे प्रस्ताव ओङ्कारेणाददीत ।
अथाप्याह—रसो वा एष साम्नां[10] यदोङ्कारः[11] ।
नैतेनातिरेकोऽस्तीति ।
20 प्रथम एव प्रस्ताव इत्यपरम्[12][13] ।
स्तोत्रीयाया एतान्यङ्गानि भवन्ति ।
सकृत्तु[14] खलु स्तोत्रीयाया ओङ्कारो भवति ।
अथापि परिचष्ट ऊर्ध्वं प्रतिहारादोङ्कारेणादानम् ।
अथाप्येवमन्यैः सामभिः समाधिरिति ॥ १ ॥
25 ते खलु शश्वदेके पुरीषपदैः[15] प्रतिपद्यन्ते ।
पञ्चविधेन पञ्चमस्याह्नः पृष्ठं प्रतिपत्स्यामह इति ।
अथाप्येव[16] शक्वर्यवसान[16] स्तोत्रं भविष्यतीति ।
अथाप्याह—"गोष्ठः पुरीषम्" इति कृत्वा वै गोष्ठं पशूनुपाकुर्वन्ति । PB. 13. 4. 13.

---

1 वत्र G1, G2, J. 2 ०थेति C. 3 Wanting in G1, G2. 4 ०र्ध्व० B. 5 ०हारा० B. 6 ०याम् G1, G2, J. 7 कथं प्र० B; कथमस्तु० G1, G2, J, K. 8 क्रियेयेतेति G1, G2. 9 नू प्र नं G1, G2, J. 10 साम्नां G1, G2. 11 यदोका० G1. 12 ०रः C. 13 G1, G2, J add स. 14 सकृन्तु C, G1, G2, J. 15 ०पादैः G1, G2, J. 16 ०ण B.

अन्ततो वयं कुर्मः ।
एवं च छान्दसोऽध्यायः ।
अपि चैवं[1] पञ्चविधं पञ्चमस्याह्नः पृष्ठं[2]मनुसं[3]स्थास्येत इति ।
यद्वेतद् गोष्ठैः[4] पुरीषमिति, इष्ट्वा[5] वै[6] पशून् गोष्ठं कुर्वन्ति ।
5 अथापि[7] पश्चार्धसेविपुरीषमिति ।
तत्खलु सर्वाभिः सह स्यादित्याहुः ।
तृचदृष्टय इमा भवन्ति लोकदृष्टयः ।
तदिदमन्तेऽनुषक्तस्थाने समाम्नातं भवति ।
अथाप्येवं सर्वा[8]स्त्वस्य पुरीषा भविष्यन्तीति ।
10 व्यवायश्चाभविष्यदतिगुरु[9] च ।
[ अथ वै विद्यावान्तेषु विद्यावसमा[10]धय इति ।
व्यवायश्चैव गुरू च । ][11]
अथ वै पर्यायान्तेषु[12] पर्यायसमा[13]धय इति ।
व्यवायश्चैव गुरू च ।
15 अथ वा[14] उत्तमामेवानुचरेत् ।
एतया हि सहोत्प[15]न्नं भवतीति ।
व्यवायश्चैव गुरू च ।
सकृदन्ततः स्यादित्याहुः ।
एतच्चा[16]सां लाघिष्ठम् ।
20 अपि चैव[17]मव्यवायः ।
अथापि परिनिष्ठायाशिषमुदित्वान्तेऽनुज्ञां वदिष्याम इति ।
अथापि पश्चार्धसेविपु[18]रीषमिति, तासां धर्मो नियुज्यते—
न व्याहरेत्, ना[19]श्नीयात्, अभिनद्धाक्षं[20] आसीत ।
प्र[21]वेकोऽयं ब्र[22]ह्मणो भ[23]वति ।
25 तन्नो ह प्रतिलभ्य प्र[24]वहेत् ।
एतमेवाहं ब्रह्मचर्यं[25] धर्मे[26]षु मन्य इति गौतमः ।

1 वैवं G1, G2, J. 2 षष्ठम० G1; षष्ठः म० G2, J. 3 ०प्यत इति । C, ०स्यति । G1, G2; ०स्य इति । J, K. 4 ०ष्ठमपु० B. 5 इष्ण्वा B; इष्ट्वा G1, G2; ताष्ट्वा J. 6 B adds व. 7 अपि G1, G2. 8 सर्वाः सपुरीषा भ० C; सर्वास्व पुरीषो भ० G1, G2, J, K. 9 ०ह C, G1, G2, J 10 ०साधय G1, G2, J. 11 अथ…च wanting in B. 12 ०न्ते G1, G2, J. 13 ०सामाधाय G1, G2. 14 या B. 15 ०पनश्वर० G1, G2, J. 16 ०त सां G1; ०त-सां G2, J; एतश्चासां K. 17 चैव व्य० G1, G2. 18 ०र्वसावि० K. 19 नासीतयाया B. 20 ०द्धाक्षत्वासीत C; ०द्धाक्षि असीत G1, G2. 21 प्रवे० C. 22 ब्रा० B. 23 ०न्ति G2, J. 24 ०देहेत G1, K 25 ०र्यं० C. 26 धर्मं C, G1, G2, J, K.

तस्वै[1]तिगुरु वाभविष्यत्।
अपि च नो[2] ह मरणाशङ्कमिमास्तु स[3]र्वच्छन्दस्या भवन्ति।
आसा[4]मेव चरतः सर्वच्छन्दसामिव व्रतं चरितं भविष्यतीति।
अथाप्याहुः—यानि रूपाणि ब्रह्मचारी न पश्यति, यान्[5] रसान्नाश्नाति,
5 लब्ध्वा[6] हैनान् समावृत्य[7] भवति।
तमेतद्रूपेभ्यश्च रसेभ्य[8]श्च समव[9]रुन्धन् मन्यत इति ॥ २ ॥
तासां खलु त्रीन् संवत्सरान् ब्रह्मचर्यं चरेत्।
कृष्णवस्त्रैः[10] कृष्णभक्ष आचार्याधीनस्त[11]पस्वी तिष्ठेद्दिवा[12]सीत नक्तम्।
सायं प्रातरुदकोपस्पर्शी सर्वभूतेभ्यः पन्थान[13]मददद्वर्यति।
10 शरणां नातीयात्।
नित्य[14] स्निग्धवासा बु[15]भूषेत्।
उदर्क[16]साधवो हि महानाम्न्य इति।
एवं खलु[17] चरतः कामवर्षी पर्जन्यो भवति।
उदकोपस्पर्शनं[18] किमर्थमिति।
15 अर्बुक्ताः[19] शकर्य[20]स्तां एव प्रविशन् मन्यत इति।
अपि वा पशूनामेवं[21] पायना[22]र्थं स्यात्[23], पशूकाः शं[24]कर्य इति।
स[25] खलु प्रथमां स्तोत्रीयामनुगाप्य[26]होरात्रे वाग्यतः परिणद्धाक्ष आ[27]सित्वा तस्या[28] संवत्सरं ब्रह्मचर्यं[29] चरेत्।
एवमेव द्वितीयायाः।
20 एवं तृतीयायाः।
ते खलु शश्वदेके[30] प्रथमत एव परिणह्यन्ति।
प्रथमत[31] एव यथा न प्रध[32]क्ष्यतीति।
अभ्यासं प्रत्येके।

---

1 तत्वेऽति० G1, G2, J, K. 2 नोहं रणाशङ्कमिमाः B; ०मिमस्तु C. 3 स्वसर्व० B; सर्व० G1, G2, J, K. 4 ०सां मे C, G1, G2. 5 तान्यासन्ना० C; तान् G1, G2, J, K. 6 लब्धा B, G1. 7 ०हृ० G1, G2. 8 Wanting in K. 9 समत्वकुल B; समव० J. 10 Wanting in G1. 11 ०नत० G1, G2, J. 12 ०दिवा० G1, G2. 13 ०मान्दयद B; ०मददृद्र० G1. 14 सन्दिग्ध० B. 15 ध्रुभू० G1. 16 ०के सा० G1, G2, 17 G1, G2, J add ह. 18 ०नी G1, G2. 19 भनुक्ताः C, G1, G2, J, K. 20 ०र्य इति खता G1, G2. 21 ०मे G1, G2. 22 ०सार्थं K. 23 G1, G2, J add पशूर्थं. 24 शा० G1, G2. 25 Wanting in C, J, K. 26 ०गाया० C; ०गाप्या० G1, G2, J. 27 असि० G1, G2, J. 28 ०स्याः B, C. 29 ०चर्यं C. 30 शश्वादते G1, G2, J; ०देते K. 31 ०मन्त B. 32 प्रदक्ष्य० C, G1, G2, J, K.

अभ्यासं प्रत्यभ्यसिष्यामह[1] इति ।
अपि[2] तं[3] प्रातरभिवीक्षयन्ति, योऽन्यं[4] प्रधक्ष्यन्तं मन्यन्ते, योऽग्निं वत्समादित्यम् ।
अपोऽभि[5]व्यख्यमित्यपः ।
5 ज्योतिरभिव्यख्यमित्यग्निम् ।
पशूनभिव्यख्यमिति वत्सम् ।
स्वरभिव्यख्यमित्यादित्यम्[6] ।
अथाप्येतं[7]द्विवैता भवन्ति ।
आप इवाग्निरिव वत्स इवादित्य इवेति ।
10 अथ खल्वाह—"पां[8]र्थुरश्मं[9] राजन्याय ब्रह्मसाम कुर्यात्, वार्हद्गिरं ब्राह्मणाय, रायोवाजीयं वैश्याय" इति । PB. 13. 4. 18
पां[10]र्थुरश्मं चेद् ब्रह्मसाम स्यात्, वार्हद्गिरस्यैतं[11]द्वंद्वं[12] कुर्यात् ।
यद्यु वै रायोवाजीयमेते[13] वार्हद्गिररायोवाजीये, स स्तोत्रीयेऽन्योन्यस्य स्थानं व्यतिहरेत् ।
15 कथमुभयेषु[14] समर्वय[15]त्स्विति ।
भूम्नो[16] वंशं[17] नयेद्, गृहपतेरित्येके ।
अपि [ वा ] वार्हद्गिरमेव कुर्यात् ।
नित्यं च श्रेष्ठ[18]वर्णीयं चेति ।
वैश्वामित्रस्तोत्रीये षोडशिना स्तूयमान आष्टमिकमुक्थ्यं[19]स्तोत्रीयं प्रतिनि-
20 दध्यात्, असं[20]ख्याराय वीङ्कस्तोत्रीये वसिष्ठस्य प्रियमनुकल्पयेद् वसिष्ठस्य प्रियमनुकल्पयेत् ॥ ३ ॥

दशमः[21] पटलः

अथ षष्ठेऽहनि "रैवतीषु वारवन्तीयं पृष्ठं भवति ।" PB. 13. 10. 4.
तदेके प्रत्यक्षं ब्रुवते ।
25 एतत् प्रकृतौ दृष्टं भवतीति ।
अथापि यद्रैवत्यः पृष्ठम[22]भविष्यन्[23] पवमान आसां धर्ममकरिष्यन्निति[24] ।

---

1 ॰ष्या B; ॰ष्याम G1, G2, J, K. 2 अपि is wanting in G1. 3 च B. 4 यान्य प्रधक्ष्य॰ B; यान्य प्रवक्ष्यं C. 5 एवोभि॰ B; आयाभि॰ G1, G2, J. 6 न्। अथाप्येतद्दिवैता is wanting in G1, G2, J, K. 7 ॰तानि B. 8 पार्थ॰ B. 9 श्या is wanting G1, G2, J. 10 पार्थ॰ B, G1, G2, J 11 ॰स्यैवर्षु C 12 C, G1, G2, J, K add एव. 13 ॰ये G1, G2, J. 14 समावयस्थिनि G1, G2, समावयत्स्थिति J. 15 मुम्नो C. 16 वधूशं G1, G2, J, K. 17 Wanting in B. 18 G1, G2 omit श्रेष्ठ. 19 ॰मुक्थ॰ C, K. 20 संचा॰ C. 21 In B only ( here ends the 1st daśati of the Paṭalas ). 22 पृष्ठः मा भ॰ G1, G2. 23 ॰ष्यत् C, G1. 24 ॰ष्यदिति B, K.

अथाप्येनु[1]रू[2]पमग्निष्टोमसाम्नि वारवन्तीयस्यैवा[3]नुरूपं कल्पयतीति ।
रेवत्य इत्यौर्ध्व[4]द्राक्षीरेवतीषष्ठानां सुष्टिब्राह्मणं भवति ।
तासां धर्मो नियुज्यते—"तद् गवां घोषोऽन्वसृज्यत ।" इति । PB. 7. 8. 13; Dh. Dr. Ś. 6. 1. 6.
5 अथापि प्रतिपद्भिः पृष्ठानि संवर्णयन्[5] रेवतीरेवाभिसंवर्णयति षष्ठे[6] च विश्वजिति च ।
अथापि पृष्ठ[7]स्तोमात् पृष्ठानि च्यावयन् रेवतीरपि च्यावयति ।
अथाप्यनुगृहीतपृ[8]ष्ठे रेवतीरेवानुगृह्णातीति ।
अथापि परो[9]क्षपृष्ठोपाङ्[10]क्त्यपृष्ठयोरनुगृहीतपरोक्ष इति वारवन्तीयमेवानु-
10 गृह्णाति ।
यद्वेतदेतत् प्रकृतौ दृष्टं[11] भवतीति, ब्राह्मणेनैव कारणं वदेति ।
यद्वेतत् पवमान आसां धर्ममकरिष्यमिति, उपो[12]ते पृष्ठत्वं स्तोत्रीयेण मन्यते[13] ।
यद्वेतद् वारवन्तीयस्यैवानुरूपं कल्पयतीति[14], उक्तं वारवन्तीयस्य
15 परोक्षम् ।
तदेतद् रेवतीपरोक्षमेव भवतीति ॥ ४ ॥
अथ खल्वाह—"प्रायणतो द्विपदाः कार्या३ उदयनता३ इति ।" PB. 13 12. 1.
कथं प्रायणतः स्युरिति ।
20 प्रथमेऽहनीत्याहुः ।
ए[15]तद्धि प्रायणं भवति ।
अथापि दृश्यते प्रायणीयस्योक्थ्[16]यत्वं यथा[17] चतुर्विंशस्य ।
तथा षष्ठस्याग्निष्टोम्यं यथाभिप्लविक[18]स्येति ।
द्वितीय इत्यप[19]रम् ।
25 एतदुक्थानां प्रायणं भवति ।
अथाप्येवमुक्थव्यतिहारः सिध्यति ।
अथाप्येवं प्रकृतिसविधतरं भवतीति ।
"क[20]थमावृत्ते पृष्ठ्ये स्थाधर्मा" इति । Ārṣ. K. V. 44 a.

1 ०व्या० C. 2 रू is wanting in G1, G2, J, K 3 ०स्यानु० B. 4 ०द्राक्षी० G1, G2, J, K. 5 ०यन नेवती० G1, G2, J, K. 6 षष्ठी J. 7 पृष्ठा० C. 8 ०तपृष्ठे G1, G2 J. 9 ध्य for क्ष in G1, G2. 10 ०पाङ्क्य C, G1, G2, J, K. 11 Wanting in G1, G2. 12 उपास्तं B. 13 ०न्यत् K. 14 ०यन्तीति B. 15 एव त० G1, G2, J, K. 16 ०वथ्यत्वं G1, G2, J, K. 17 Wanting in C. 18 ०क C; इति is wanting in G1, G2, J, K. 19 ०राम् G1, G2, J. 20 कतमा० C; कथमाहस्ते G1, G2, J.

आवृत्तस्याप्यन्त एव स्युरित्येके—यदा षडहः सन्तिष्ठत इति हि भवतीति ।
अथापि षडहधर्मा इत्याचक्षते ।
नचैतत् षष्ठस्य साधीयो[1] यथो च प्रथमस्य ।
"त्रयस्त्रिंशस्य त्वेव संस्थायामित्याचार्यैः[2] ।" Ārṣ. K. V. 44 a.
5 सं[3] एतदावृत्तेरवयवः[4] ।
य इत उपक्रमधर्मः स परस्तात् संस्थाधर्मः ।
यः परस्तात् संस्थाधर्मैः[5] स इत उपक्रमधर्म इति ।
अथापि य एतानावृत्तस्यान्तं परिहरेत् सर्वाण्येव नूनं[6] सोऽन्तलक्षणान्या-
वृत्तस्यान्तं परिहरेदिति ॥ ५ ॥

10 त्रीणि दशरात्रस्य विच्छिन्नानीति शाण्डिल्यः ।
पञ्चममभितो द्वे, षष्ठादूर्ध्वमेकम्[7] ।
तेषां सन्तानाय सन्तनीति[8] ।
अनुपूर्वं[9] "सूक्तानुरूपांश्छन्दोमान् करोति" पृष्ठ्यंच्छन्दोमानामकृत-
कारय । Ārṣ. K. V. 28 b.
15 अथाप्य[10]कृताः ।
[ अतैः[11] ] प्राक् सूक्तानुरूपतेति[12] ।
अथापि प्रजापतिसं[13]स्तावेषु प्रजास्थानमभ्यचर्द्धयिषीत्[14] ।
"बृहद्रथन्तरे पृष्ठे[15]" नहि षाडहिकान्यनुभवन्ति । Ārṣ. K. V. 28 b.
नो व्यलुलुप्सीत्[16] ।
20 अथापि शिथिलोक्त
तेषां प्रत्यक्षाभ्यां पृष्ठाभ्यां दृढीभावो भविष्यतीति ।
अथापि तम उक्ताः ।
ते एते ज्योतिषी[17] साम्नाम्[18] ।
स कस्य हेतोः ।
25 बृहत्पूर्वं[19] युक्त इति ।
कृतयोः क्रियमाणयोरेषा कृताकृतिः ।
अथापि स्तोमं[20]प्रत्यवाये पृष्ठतो रोहमदिदर्शयिषीत् ।

1 साधियो C; साध्ययो G1, G2, J, K. 2 °र्यः B. 3 Wanting in C, G1, G2, J, K. 4 °दावृत्ते रूपम् C, K; °दारुपवृत्ते ( °त्ते J ) रूपम् G1, G2, J. 5 °र्मैः B. 6 सोक्षोपणन्याद्वृस्यान्तं B; सोन्तलक्षणां न्या° G1, G2. 7 षष्ठे पूर्वमेकम् Ck. 8 °नी B. 9 पृष्ठ° G1, G2, पृष्ठयः छ° K. 10 °प्यप्रकृतवादः C. 11 Wanting in B, C. 12 °पयतेति C; °पत्येति G1. 13 प्रजापयति° C; प्रजाति° G1, G2, J, K. 14 °यिष्यन् B. 15 षष्ठे J. 16 °व्यलोलु° B. 17 °षि B. 18 °म्ना B. 19 कृत° C, G1, G2, J. 20 °मः प्र° G1.

वर्ष्मोक्तिं[1] बृहदिति ।

अथापीदं[2] वैतस्थानं बृहदासितया वैतस्य[3] मानसंतया[4] ते व्यत्यासं[5] प्रयुङ्क्ते ।

तत् कुशलं धाङ्क्षिधनानि माध्यन्दिनान्त्यान्यैडान्यभवान्त्यानि[6][7][8][9] सवन-च्छन्दसोरनुग्रहाय ॥ ६ ॥

5 "अर्कपृष्ठान् पैङ्गिनोऽधीयते[10]"[11] ।

सैषां[12] छन्दोमानां पृष्ठभक्तिः[13] ।

तेषां पृष्ठत्वे तिष्ठमानो[14] न साक्षात् करोति ।

बृहद्रथन्तरे वा[15] निकामयमानः पूर्वाविभवे[16] करोति ।

एवं नेदीयसी पृष्ठानाम् ।

10 'सप्तमेऽहनि[17] कृताकृतो भवत्यब्राह्मणविहितत्वात्[18] ।' Say. PB. 14. 5. 12; cp. Dh. Dr, Ś. 9. 3. 4.

कर्तव्य इत्याचार्याः[19][20] ।

छन्दोमानां चार्कसमाधिः[21] ।

यथा चैतत्[22] "[23]पैङ्गिनोऽधीयते छन्दोगाश्चाप्येनमेकेऽधीयते[24] ।" Caland

15 PB. 14. 5. 12.

अथापि स१रोधेऽनुगृह्यते, यथा त्रिवृति दशरात्र इति ।

नवमेऽहनि समे स्तोमे सति साध्यासां[25] बृहतीं करोति ।

कस्य हेतोरिति ।

साध्यासा पूर्वेऽहनि कृता ।

20 स एवमप्रत्यवायः[26] ।

अथापि बह्वियं चरति ।

तस्याः पथ्यतामपिपादयिषीत्[27] ।

दाशरात्रिकाणां[28] द्रव्याणां पथ्यास्या[29] ।

अथाप्येतस्यामेवैत१ सामयोग१ साधीयो[30][31] ह्यश्नुत इति ।

1 वर्ष्यो॰ C, G1, G2, J, K. 2 वृ॰ C, G1, G2, J. 3 वृ॰ G1. 4 ॰सता B; ॰सं तया G1, G2, J, K. 5 वृत्यासं G1; मत्यासं G2, J, K. 6 ॰मादि-तान्त्याभ॰ J. 7 ॰नान्यन्त्या॰ C. 8 ॰न्त्या॰ B. 9 ॰क्षानि K. 10 यै॰ C, G1, G2, J, नैगिनो॰ K. 11 ॰न्ते G1, G2, J, K. 12 ॰षां J. 13 ॰विभ॰ Caland. 14 ॰नो (?) Caland. 15 वा (?) Caland. 16 ॰चाभवे C, G1, G2, K; Caland suggests here पूर्वास्त्वाभवे. 17 ॰न्यर्कः कृ॰ S. 18 ॰ब॰ J. 19 ॰त्वा C, G1, G2. 20 ॰र्यः G1, G2, J, K. 21 चर्क॰ G1, G2, J. 22 चैतान् C. 23 यै॰ C, G1, G2; नैगिनो॰ K. 24 ॰क धी॰ G1, G2, J, K. 25 साध्यानां K. 26 ॰वम प्रत्ययवा॰ C; ॰वं प्रत्यवा॰ B. 27 पर्थतमापि॰ B; ॰मापि॰ C, ॰मापिदयितीद् G1, G2, J. 28 B adds धर्माणां. 29 पार्थास्या B; ॰स्यातं G1, G2, J. 30 अ is wanting in G1, G2, J. 31 ॰योभ्यश्नुत C, K; ॰योन्नुत G1, G2; ॰योभ्युत J.

ऐककुभस्य निधने विवदन्ते ।
पदनिधनमित्येके ।
यादृशे इमे ऋगक्षरे तादृशे इमे भवत इति ।
बर्हिर्णिधनमित्यपरम् ।
5 बर्हिर्णिधनस्थाने च युज्यते ।
अपि चास्य निधनवादो भवति ।
बर्हिर्णिधनानामुत निधनवादा भवन्ति[2] ।
अथाप्यापद्यते[3] ज्योतिर्विचारान् ।
यत् पदनिधनमभविष्यद्[4]दित्यपेक्ष्यत ज्योतिष्टोमीं[5] मात्राम्, नास्य[7] प्रति-
10 निष्कारं[6] कल्पयति बर्हिर्णिधनस्येव सत इति सत इति ॥ ७ ॥

प्रथमः पटलः[8]

अथ दशमेऽहनि चतुर्ऋच[१] होतुराज्य[१] समामनामः ।
तस्य मध्यमे भवतः—तानूनपाती च नाराशंसी च ।
द्वयानि कुलानि भवन्ति—तानूनपातीनि[10] च नाराशंसीनि च ।
15 तानूनपातीं[11] तानूनपातेषु कुर्यात्, नाराशंसीं नाराशंसेषु ।
वसिष्ठशुनका अत्रयश्च वाध्र्यश्वाश्च[12] कण्वाश्च सङ्कृतयश्चैतानि नाराशं-
सानि । cp. LŚ. 6. 4. 13.

अथेतराणि तानूनपातीनीति ।
कथमुभयेषु[13] समवयत्स्विति ।
20 भूम्नो[14] वशं नयेत्, गृहपतेरित्येके[15] ।
अपि वा तानूनपातीमेव कुर्यात् ।
एषा भूयिष्ठानां कुलानां भवति ।
अपि चैतामेवैकेऽधीयते ।
अथाप्येषा समारब्धतरा भवतीति ।
25 अथ मानसम् ।
दशमस्य भवती ३ सर्वस्याहो[16] एव दशरात्रस्येति ।

---

1 ०धनानामि० C. 2 ०न्तीति C, G1, G2, J, K. 3 ०पद्येते G1; ०पद्येते G2, J, K. 4 ०ष्यद् यत् परे० C, ०ष्यद् यत् परोक्ष्य० G1, G2, J, K. 5 ०म्यस्य B. 6 प्रतिष्का० B. 7 J adds नास्य. 8 In B only. 9 G1, G2, J omit तानूनपाती ··· नाराशंसीनि च (line 14). 10 तानूनपातीनि ··· च wanting in C. 11 ०र्नि B; ०न्ते C. 12 वध्र्यश्वाश्व० C, G1, G2, J. 13 ०ध्वस० B, J. 14 भूम्नो C. 15 ०पतिरि० G1, G2, J. 16 ०हौ G1, G2, J, K.

दशमस्येत्याहुः—
नैनं[1] दशमेनाह्ना विप्रयुज्यमानं पश्यामः ।
अथापि दशमधर्मा इत्याचक्षते ।
अथापि सार्द्ध[2] मानसेन[3] विराडनुष्टुप्सम्पत्तिसिध्यति[4] ।
5 अथाप्याहुः—सर्वमेवेदमहः पुरा मानसं[5] बभूव ।
तद्दतिगुर्विति ।
वाचꣳ समापादयाञ्चक्रुरेकस्तोत्रं[6] चित्तं[7] धर्ममनु प्रब्रुवन्[8] स्यास्यतीति ।
अथापि वाग्युक्तमहः[9] ।
संयुक्ते वाङ्मनसे[10] भवत इति ।
10 न दशमस्येत्यपरम् ।
उपरिष्टात् पत्नीसंयाजानां भवति[11] ।
यन्नूनं दशमस्याभविष्यत् पुरस्तात् पत्नीसंयाजानामभविष्यदिति ।
अथाप्यत्र त्रिकस्तोमः[12] ।
कथं त्रयस्त्रिꣳशं कृत्वा समानेऽहनि त्रिकं पर्यवैष्यदिति[13] ।
15 अथाप्यत्र गायत्रं[14] छन्दः ।
कथं त्रयस्त्रिꣳशदक्षराः कृत्वा समानेऽहनि गायत्रं[15] पर्यवैष्यदिति ।
अथापि[16] गायत्रं साम ।[17]
कथमग्निष्टोमसाम कृत्वा समानेऽहनि गायत्रं पर्यवैष्यदिति ।[17]
अथापि वाग्युक्तमहः ।
20 अन्या[18] वाग्भवत्यन्यन्मनः[19] ।
नास्य भूयान्[20] दशमेनाह्ना सम्बन्धो[21] यथो[22] च[23] प्रथमेनेति काापटवः ।
सर्वं वैतद् दशरात्रस्य[24], सर्वो वैतस्य दशरात्र इति शाण्डिल्यायनः ।
आयामवाचं दशाक्रमं मनो व्याप्नुवाम[25] ।
न[26] संयुक्ते वाङ्मनसे भवत इति ॥ ८ ॥

25 अत्र[27] गायत्रीः करोति ।

---

1 नैतद् Cक, K; नैव Cख, G1, G2, J. 2 साध्याद् B. 3 ०मासेन G1, G2, J. 4 ०राद्स० C, G1, G2, J, K. 5 मानं G1, G2, J. 6 ०त० B. 7 वित्तं G1, G2, J. 8 प्रा० B. 9 वायुक्त० G2, J, K. 10 वाङ् मा० B. 11 ०न्ति B. 12 ०कः स्तो० J, K. 13 ०वयिष्य० C, G1, G2, J, K. 14 ०त्रं B, G1, G2, J. 15 ०त्री G1, G2. 16 तथा० G1, G2. 17 C omits it. 18 अंस्या G1, G2, J, K. 19 ०न्यस्तनः C; ०न्यमानः G1, G2, J; ०न्यन्माना K. 20 भूयाश० C; भूमान्दश० G1, G2, K; भूमान्द्रश० J. 21 ०बद्धो G1, G2, J, K. 22 यथा C. 23 Wanting in C. 24 ०त्र G1, G2, J. 25 ०नोऽप्याप्तवाम C, J, K; ०नोऽप्याप्त G1, G2. 26 G1, G2 omit न संयुक्ते. 27 तत्र C, G1, G2, J, K.

स्थानं गायत्रीणां यदि[1] परस्याद्वो गुर्वैवेदꣳ स्तोत्रं तत्र लघिष्ठं छन्दो[2]ऽचि-
कीर्षीत्।
अ[3]थाप्येव[4]माद्यवसानसमाधिः।
प्रतिष्ठार्थो वाव गायत्रीः करोतीति[5]।
5 तासु विवदन्ते—ऐन्द्र्[6]यः प्राजा[7]पत्यः सार्पराज्ञ्य[8]श्चान्द्रमस्यः सौर्य इति
शाकपूर्णि[9]ः।
तथा धानञ्जय्यः।
प्रत्यय आदित्यः, प्रत्ययो मनः।
प्रत्यये प्रत्ययम्।
10 तत्र[10] गायत्रं करोति।
स्थानं गायत्रस्य यदि परस्याद्वो गुर्वैवेदꣳ स्तोत्रं तत्र लघिष्ठं सौमा[11]चि-
कीर्षीत्।
अथाप्येवमाद्यवसानसमा[12]धिः।
प्रतिष्ठार्थो वाव गायत्रं करोतीति।
15 "यज्ञायज्ञीयगौरीवितिरथन्तरवामदेव्यान्येवंयुक्तानि सामव्यूह इत्या-
चक्षते।" Ārṣ. K. V. 31a; 131b.
"अथैतस्मिन् ब्रह्मोद्ये वदति।
भूयाꣳसीव ह स्म शाण्डिल्यः प्र[13]तिदिशति।
यद्वो[14]ऽश्वत्रिरात्रे ब्रह्मोद्यं तद्वा प्रत्ययिष्यद्यथा वैतद् ब्राह्मणा अधि-
20 मन्त्रꣳ समुदाहरन्ती[15]ति।" cp. LŚ. 3. 8. 7-9.
वरव[16]रणमत्र भवत्यन्तर्निर्वचना आशिष इति। cp. LŚ. 3. 8. 10.
वृत्वा[17] वरानौदुम्बरीꣳ समभिपद्यन्ते, सर्वकृ[18]तिं कृत्वा निस्वरिता इव
मन्यन्ते। cp. LŚ. 3. 8. 11.
अत आत्मानमूर्जा प्रत्याप्याययन्तो मन्यन्ते[19] ऊर्गु[20]दुम्बर इति।
25 "स[21]मासे छन्दोव्यूहे सामव्यूहं कुर्वी[22]त इति गौतमः।
अकृतकारा[23]र्थः" त्रयस्त्रिꣳशमग्निष्टोमसाम करोति। Ārṣ. K. V. 23 b.

---

1 यद B. 2 सामचि० K. 3 यथा० G1, G2, J. 4 ०वसान० G1. 5 ०रोति B. 6 ०न्द्रः B. 7 प्राजापत्याः C, K; प्रजापत्यः G1, G2; प्रजापत्याः J. 8 ०ज्ञ० C, G1, G2; ०ज्ञः श्चा० J, K. 9 ०पूर्णाः G1; ०पूर्णि० G2. 10 त्र गाय is wanting in G1, G2, J. 11 ०म० G1, G2. 12 ०माधि C, ०धिनि G1, G2, J. 13 प्रदि० C, J, K; प्रविश० G1, G2. 14 यद्वादे० G1, G2. 15 ०न्त इति B, ०रति G1, G2, J, K. 16 वरण० C; चरचरण० G1, G2, J. 17 प्र B; वृत्या G1, G2, J. 18 ०कृतं B. 19 B adds इव. 20 वाशु० B. 21 विस० B; समाधे G1; समादौ J, K. 22 कुर्वेत K. 23 ०र्थे G1, G2, J.

उपवदितान्[1] छन्दोमानवसानेऽचिकीर्षीत्[2] ।
अथापि शिथिलोक्ताः[3] ।
प्रतिष्ठोक्तश्च त्रयस्त्रिंशः, तमवसानेऽचिकीर्षीत् ।
अथापि त्रयस्त्रिंशे क्रियमाणे त्रिके सार्परांज्ञे[4] त्रिंशतः[5]स्तोत्रीयं दशम-
5 महः सम्पद्यते सा विराट् ।
अथाप्येवं द्वादशपञ्चविंशानहः सम्पद्यते ।
[6]नोहैनमृक्स्थादक्षरादकारिपं सम्पदा चिदेनमुपाप्स्यामीति ।
एतद्वयं शाण्डिलम् ॥ १ ॥

पञ्चदशस्तोत्राज्ज्योतिष्टोमात् सषोडशिकां ससंन्धिकां[7] रात्रिं ब्रूहीति ।
10 चतुर्विंशतिमाज्येभ्य आदत्ते ।
द्वे वामदेव्यात्, चतस्रः सार्कमभ्वात्[8], दश गायत्रास्तृचाः, तान् रात्रेः स्थाने निदध्यात् ।
चतस्रः ककुभः सौभरात्, तासां द्वितीयातृतीययोश्चतुरंक्षरं[9][10] चतुरक्षर-
मुद्धृत्य द्वे प्रथमायामुपदध्यात्[11] ।
15 एवं स विरा[12]ट्प्रथमो गायत्र्युत्तरो वैतहव्यस्तोत्रीयः[13] ।
अतिशिष्टानीतरस्यां ककुभ्युपदध्यात्, तां षोडशिनः स्थाने निदध्यात् ।
चतस्रो नार्मेधात्, तिस्रश्चोष्णिहः, एकां चानुष्टुभम्, तां षो[...]
स्थाने निद[...]
[14]अतिशिष्टास्तिस्रः, कौत्सस्य द्वे[15] [बृहत्यौ[16]] नौधसात्, तथा काले[...]
20 तासामेकां[17] षोडशिनः स्थाने निद[...]
ता[18]ः सर्वाश्चतुस्त्रिंशदक्षराः सम्पद्यन्ते ।
[19]अतिशिष्टास्तिस्रः सन्धेः स्थाने निदध्यात् ।
द्वे[20] ककुभौ[21] रथन्तरात्[22], चतस्रो यज्ञायज्ञीयात्[23], तासां द्वे द्वे सन्धि[...]
श्रीयेपूपदध्या[...]

1 अप० B. 2 ०ता C, G1, G2, J, K. 3 ०नां नाव० C, G1, G2, J. 4 ०राश्ये B, सर्पे राज्ञे G1, G2, J. 5 त्रिशतस्तो० B, K. 6 नाहीनं साक्षादक[...] C. G1, G2, J, K. 7 सन्धिकां B; ससं ससं धिकं ससंधिकं G1, G2; सस[...] धिकां ससधिकां J. 8 सायकम० G1, G2, J. 9 द्वितीयायास्तृतीयायाश्च० C; ०तृ[...] यायाश्च० G1, G2, J. 10 ०क्षं तुरक्षरमु० G1, G2, J. 11 ०या उ० K. [...] विताराः प्र० G1, G2, J, K but K has its त struck off. 13 ह is wanting i[n] B; वैतहव्यः स्तो० K. 14 इति० G1, G2, J. 15 हे G1, G2. 16 Wantin[g] in B. 17 ०का षो० C; ०कां षो० G1, G2, J. 18 G1 repeats here line[s] 17-20. 19 C, G1, G2, J, K add अन्तस्थां and read प्रति०. 20 G1, G2, J add वसषोडशिक (०का G2, J) ससंधिक रात्रिं निर्मिमीते. 21 ०भ G1, G2, J. 22 ०राः C. 23 ०याः C, G1, G2, J, K.

एवमेताꣳ सषोडशिकाꣳ ससन्धिकाꣳ रात्रिं[1] निर्मिमीते ॥ १० ॥

ततः पृष्ठ्यं[2] ब्रूहीति ।

सवनेभ्यः पूर्वस्त्र्यहः षोडशिनश्चतुर्थꣳ रात्रेः पञ्चमꣳ सन्धेः षष्ठं पृष्ठ्यौ[3]ञ्छन्दोमान्[4] ब्रूहीति ।

5 त्रिवृत्पञ्चदशयोः समासश्चतुर्विꣳशस्तत् सप्तमम्, सप्तदशत्रिणवयोश्च[5]तुश्चत्वारिꣳशस्तदष्टमम्, एकविꣳशत्रयस्त्रिꣳशाभ्यां नवम[6]ं दशमे, सोऽष्टाचत्वारिꣳशं नवमे निधाय पञ्चदशाष्टकानादत्ते ।

सर्वꣳ षोडशिनम्, ते सप्तत्रिꣳशत्तृचाः, तेषां चतुर्विꣳशतिमा[7]दाय दशमस्याह्नोऽष्टावष्टौ पवमान[8]स्थानेषु निदध्यात् ।

10 चतुराज्येषु तया पृष्ठ्ये[9]ष्वेकम्, अग्निष्टोमसाम्नः स्थाने तथा सार्पराज्ञे[10] ।

त्रयस्तृचा अतिशिष्यन्ते ।

तान् प्रथमस्याह्न उक्थस्तोत्रीयान् कुर्वीत ।

एवं तदुक्थ्यादुक्थ्यमभिसंक्रामति ।

त्रिवृतं पञ्चदशम् ।

15 एतौ[11] महा[12]वृक्षौ सम्प[13]दित्याचक्षत आचार्याः ।

दशरात्रो महावृक्षस्तस्य ह्य[14]ग्रं गत्वा स्वर्ग[15]मेनमुपपद्यत इति ।

नैषां[16] सर्वस्मिन् दशरात्र उपपद्यत इत्यौप[17]मन्यवः ।

त्रयस्तृचा[18] अतिशिष्यन्ते ।

तान[19]ग्निष्टोमसꣳस्थं[20] उक्थ्यस्तोत्रीयान्[21] कुर्वीत ।

20 अपरा[22]नुपच्छन्दोमेष्वेव ।

एषा सम्पत् सिध्य[23]तीति ।

तदप्येवमिव[24] ब्राह्मणं भवति—"हत ऐन्द्रोत इति होवाचाऽभिप्रतारी[25] कार्[26]क्षसेनिः, ये महावृक्षस्याग्रं गच्छन्ति क्व ते ततो भवन्ति ।" इति

---

1 सत्रि G1; सत्रि G2; सत्रि J. 2 ०ष्ठं C, G1, G2, J, K. 3 ०ष्ठ्यावछ० C, J; षष्ठ्याः छ० G1, G2. 4 ०मानं C, G1 G2, J, K. 5 ०योश्चत्वारिꣳशस्तदृशमेम् G1, G2, J; ०तद्दशमे K. 6 ०मं द० B, K; ०मे द० G1, G2. 7 ०माहादा० G1, G2, J, K. 8 ०ने स्था० G1, G2. 9 वृष्टिष्वे० G1, G2, J, K. 10 ०ज्ञः C, J, ०ज्ञ G1, G2. 11 एतौता G1, G2, J, K. 12 म० C, G1, G2, J, K. 13 पदो० G1, G2, J, K. 14 ह्याग्रं G1, G2, J. 15 ०गेगम० C, स्वगम० G1, G2, J, K. 16 तेषा G1, G2, J; तेषां K. 17 ०पगनावा: G1, G2, J; ०पगमनावाः K. 18 ०च G1, G2. 19 तान् योऽग्नि० C, J, K; तान्यग्निष्टो० G1; तान्यग्निष्टो G2. 20 ०स्तास्तो० G1, G2, J, K. 21 ०यानि B, ०त्रोन् G1, G2, J. 22 अपररूपं तच्छ० C; अपरूपं तच्छ० G1, G2, J, K. 23 ०ध्यवती० G1, G2, J. 24 ०मेव C, G1, G2, J. 25 ०रिणं B. 26 ०सेनिम् B.

पडहं महावृक्षमवोचत् । PB. 14. 1. 12.

तस्य ह्यग्रं गत्वा त्रिवृत्पञ्चदशयोः पक्षयोः क्रियां दर्शयति ।

तदप्येवमिव ब्राह्मणं भवति—"त्रिवृत्पञ्चदशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयै[1]न्ति ।" इति । PB. 14. 1. 13.

5 तयोः समासश्चतुर्विंशः ।

तस्याष्टाचत्वारिंशो द्वादशां[3]तिशिष्यन्ते[4] ।

तथा—दशमात् स चतुर्विंशो य एतां[5]ः सम्पदो[6] विदुः ।

ते पै[7]क्षिणः ये न[8] विदुस्तेऽपक्षाः ।

तदप्येवं[9]मिव ब्राह्मणं भवति—"ये वै विद्वांसस्ते पक्षिणो येऽविद्वांस-

10 स्तेऽपक्षाः" इति [10]तेऽपक्षा इति ॥ ११ ॥ ibid.

[11]द्वितीयः पटलः

अथातो गवामयनम् ।

तदेक एकेनां[12]ह्नाभिविदधति[13] ।

"सर्वं[14]" ज्योतिष्टोमेनैके[15] ।" LŚ. 4. 5. 2.

15 "अतिरात्रं[16]चतुर्विं[17]शंनवाहमतातिरात्रः" इति कृत्वा संस्तृणन्ति ।

अ[18]त्रैवैके गोआयुषी दशरा[19]त्रमित्युपा[20]हरन्ति ।

एतं संवत्सरप्रवर्हं इत्याचक्षते । cp. LŚ. 4. 5. 4.

शङ्खाहृतमिति च । cp. LŚ. 4. 5. 5.

20 एतं[21]च्छातशूर्पो वार्षगण्य आसाञ्चक्रे ।

नानाऽहोभिर्वयं कल्पयामः । cp. LŚ. 4. 5. 6.

यथैतद् ब्राह्मणम्—"अथ खलु य ऊर्ध्वं ज्योतिष्टोमदशाहाभ्याम्" ऋतवः सप्तभिः पर्यायैस्ते[22]षु ज्योतिष्टोमानाञ्च दाशरात्रिकौ[23]णाञ्च द्र[...] णामागमो भवति ।" Ārṣ. K. V. 3[...]

1 ०यो० G1, G2, J, K. 2 ०यच्छन्ति G1, G2, J, K. 3 ०शीति० G2. [4] C, G1, G2, J, K add ऽस्मात्. 5 एते C, G1, G2, J, K. 6 ०दो C, [...] G2, J, K. 7 दक्षि० G1, G2, J, K. 8 B adds मात्. 9 ०प्येव G1, G2, J, [...] 10 C does not repeat ते ... इति; K does not repeat ते. 11 In B or[...] 12 एतेना० J. 13 ०धते C, G1, G2, J, K. 14 Wanting in C, G1, G2, J[...] K. 15 ०मेनाथैके C, J, K; ०मेनाके G1, G2. 16 ०त्रि० G1, J. 17 ०शे नवा ह० B, J; ०शतेनवाहं ह० G1, G2; ०शे नवाह० K. 18 ०त्रैके C. 19 रात्र is wanting in J. 20 ०पहर० B; ०पर० G1, G2; ०पार० J. 21 एतस्या सशूर्पो वार्कखण्ड आ० C; एतस्यात शूर्पो वार्कखण्ड आ० G1, G2, J, K. 22 ०स्तेषां B. 23 ०करणं च J.

"स्तोमान्वितानि स्थानान्वितानि पृष्ठान्वितानि तन्त्रान्वितानि भागान्वि-
तानि सꣳस्थान्वितानि आशीःसमायाणीति[1] रूपां[2]च्छान्दसान्यार्यं[3]न्त्यपि
च व्यावृत्त्यर्थानि ।" Arṣ. K. V. 137a.

तत्रेह चतुर्विꣳशे यानि सप्तमात्[4] स्तोमान्वितानि तानि ।

5 यानि [ द्वितीयात्[5] ] स्थानान्वितानि तानि ।

यानि ज्योतिष्टोमात् पृष्ठान्वितानि तानि ।

[ यानि[6] ] दशरात्रात् "सर्वाणि रूपाणि क्रियन्ते" इति तानि ।
PB. 4. 2. 14.

यानि छान्दसान्यभिभवन्ति प्रवन्ति स्वस्त्ययनप्रवादान्युपक्रमेऽभिरूपा-
10 णीति तानि ।

तत् खलु बृहत्पृष्ठमपि रथन्तरं[7] माध्यन्दिनं[8] कुर्म[9] उपक्रमणीयमहरिति ।

रथन्तरं द्वितीयं[10] बृहद्धे[11] के चोभयसामान[12] इति ह स्माह शाण्डिल्यायनः ।

बृहत्पृष्ठास्ते रथन्तरमाध्यन्दिना आंशयेनैव[13] ।

अपि[14] च स्वे सवने स्वे छन्दस्युभे वामदेव्योत्तरे भवत इति ।

15 चतुर्ऋचं होतुराज्यꣳ समामनामः ।

तासां चतुर्थीमुद्धरति ।

उद्धर्ती[15] भवति ।

अपरूपा प्रायणार्थे ।

अथार्य्यस्याꣳ[16] स्वरप्रवादो[17] भवति ।

20 अपरूपा स्वस्त्ययनार्थे ।

अथ यत्रैतत् सर्वस्वारे भवत्येतां[18] तत्र करोति ।

अथ खलु प्लवमन्वहं ब्राह्मणं सन्तमोन्वहं[19] कुर्मः ।

एवं च रहस्यब्राह्मणं[20] दर्शयति ।

अपि शश्वद्ब्राह्मणमधीयते ।

25 ते वा एते प्लवातिप्लुता[21] ये प्लवमन्वहमुपयन्तीति ॥ १२ ॥

उद्धरन्त्याचार्याः—त्रैककुभꣳ समानोदर्कयोनि ।

अपरूपं प्रायणार्थे ।

---

1 ०याणि B. 2. रूपाणिच्छा० B. 3 ०या० B. 4 ०मा G1, G2, J. K. 5 Wanting in B. 6 Wanting in B; ०या G1, G2, J. K. 7 Wanting in B. 8 ०तरमध्य G1, G2, J. 9 म० C, G1, G2, J. K. 10 ०यमिति C, G1, G2, J, K. 11 ०इदेके G1, G2. 12 चो is wanting in G1, G3, J. 13 कुशलेनैवम् C, G1, G2, J, K. 14 Wanting in C, G1, G2, J, K. 15 उद्धरत्युनी G1, G2, J. 16 ०र्य्येतस्याꣳ C, G1, G2, J, K. 17 ०स्वारंमेण प्र० B. 18 ०स्येको B. 19 ०न्तमन्व० B. 20 ०णे C, G1, G2, J, K. 21 ०तिप्लुवा C.

तत्रैतत् सौभरं पृष्ठान्वितम् ।
विकल्पो वा स्याद्[1] ब्राह्मणचोदितत्वात् ।
"अथ[2] खल्वाहु[3]—'सर्वाणि रूपाणि क्रियन्ते' इति । PB. 4. 2. 14.
तत्र[4]चार्या[5] एतेष्वेव[6] द्वैव्येषु[7] सर्वान् स्तोमान् सर्वाणि[8] पृष्ठानि सर्वा[9]
5 विभक्ती[10]र्दशरात्र[11]रूपाणीति भक्ति[12]मात्रेणैव कल्पयन्ते ।
त्रिवृत्पञ्चदशौ चतुर्विंशौ[13] सम्पद्यते[14] ।" Say. ibid.
पञ्चदशसप्तदशान् पञ्चैकविंशान् षडेव त्रिणवान् षट् त्रयस्त्रिंशान् सर्वाणि पृष्ठानि बृहद्रथन्तराभ्यामुपाप्तानि ।
एतत्परोक्षा[15]णि ह्रीत[16]राणि, वामदेव्येन वैतसाद्धिरुष्ठानि, उद्वंशीयेन वा ।
10 एतद्धि सर्वेषां रूपमिति ।
अनिरुक्तौ[17] विभ[18]क्तयः ।
निरु[19]क्तं सर्वाभि[20]प्रायम्, वामदेव्येन स्वरविभ[21]क्तिः ।
पृथक् दा[22]शरात्रिकेभ्यो द्रव्यागमं सम्पश्येत् ।
उपव[23]ती प्रथमात्, अग्नियवती द्वितीयात्, दविद्युत्[24]वती तृतीयात्,
15 सत्रासाहीयं सस्तोत्रीयं चतुर्थात् ।
अथ खलु साकमश्वमुक्थप्रणयेऽकरिष्यत् ।
अतिरात्रे तत्कृतं भवति ।
तत्र समविचारयिषीत् ।
तत्रैतत् सत्रासाहीयं त्र्यहोपक्रमादुपक्रमेत[25] ।
20 बार्ह[26]ताद् बार्हते ।
सौढवतीषु सौढव[27]र्णमः ।
अथेदं कर्म सहेमहीति पार्थं पञ्चमात्[28] ।
उद्वंशीयं षष्ठात् ।
"यद्वा उद्वंशीयं तदुद्वंशपुत्रः ।" इति हि[29] भवतीति । PB. 13.
25 12. 10.
उद्वंशीयेनैव सर्व[30]रूपावाप्तिमेके ।

---

1 ॰स्याद् C. 2 अथो S. 3 ॰हुः S. 4 तत्र is wanting in S; C, G1, G2, J, K add खलु after तत्र. 5 ॰र्यः G1, G2. J, K. 6 ॰ष्वेव G1, G2, J. 7 Wanting in C. 8 सर्वापि G1, G2, J. 9 सर्वाणि G1, G2, J, K. 10 ॰क्तीदर्श॰ C; ॰क्तीदशदश॰ G1, G2, J; ॰क्तीनि K. 11 ॰त्रि॰ G1, G2. 12 विभ॰ S. 13 ॰शां स॰ C, G1, G2, J, K. 14 सम्पा॰ S. 15 ॰क्षणी G1, G2, J. 16 ह्रि॰ G1, G2, J. 17 ॰क्ताया C. 18 Wanting in C. 19 C adds विभक्तं. 20 ॰णिप्रायं G1, G2, J, K. 21 ॰भ॰ B. 22 दाद॰ B. 23 ॰वीती J. 24 ॰युती B; ॰युतती K. 25 ॰मे B, G1, G2, J, K. 26 बार्हतमिताद् B. 27 ॰र्णमः G1, G2. 28 ॰नम् B. 29 हे G1, G2, J. 30 सर्वारू॰ G1, G2, J.

बहु सप्तमात्।
"इन्द्रो अग्नां नमो बृहत्" SV. 2. 150; RV. 8. 12. 15; PB. 11. 7. 3; 14. 8. 2.

इत्यष्टमात्।
समन्तदैर्घश्रवसे नवमात्।
5 अभीवर्तः सस्तोत्रीयो दशमात्॥ १२॥

# अथ पञ्चमः प्रपाठकः[1]

अथैषोऽभिप्लवः[2]।
तस्मिन् सारण्ये गेयं[3] छन्दः कृतं बभूवेति शाण्डिल्यः।
अर्द्धमेव प्राग् विषुवतोऽर्द्धमूर्ध्वं[4] सादित्यव्रतानि शुक्रियाणि विषुवतीति,
"सतवःश्यावीयानि सामानि व्रत इति" समूहति। Ārṣ. K.V. 50a.
5 बार्हद्रथन्तरपृष्ठ्यादनित्याभिरनित्योऽयं षडह[5] इति।
अषाडह्निकीरनित्या इत्याचक्षते।
[ ते[6] ] *खलु शश्वद्भाल्लविनः स्तोत्रियात् प्रतिपदः कुर्वन्ति, यथास्थान-मेवानुरूपान्।*
अनुरूपान् वयं प्रतिपदः[8] कुर्मः, स्तोत्रीयानुरूपान्।
10 एवं यथोत्तरं[9] स्तोत्रीयानुरूपाणां प्रत्याहारो भविष्यतीति[10]।
षडहवशेन नाना[11]प्रतिपदः समानं पर्यासम्[12], एकाहवशेन तेन प्रच्युतं द्वितीयपर्यासं प्रथमेऽहन्यनुगृह्णाति।
अथैतान्[13]येव वैयूहिकान्[14]याज्यान्युद्धृत्य गायत्राणि तद्विभक्तीनि प्रतिनि-दधाति।
15 त्रीणि त्रिणिधनानि[15] करोति।
त्रीणि[16] ह्येव षडहेऽवधारितत्रिणिधनानि भवन्ति।
तानि यत्र यथाकृतमभ्यस्यति[17]।
आयास्यं प्रायश्चित्तिसाम षष्ठेऽहनि चिकीर्षन् पार्श्वे द्वितीयस्य माध्यन्दिने[18] करोति।

---

1 In C only. 2 ०वाः G1, G2, J, K. 3 गेहे G1, G2; गेहं J, K. 4 ०वती B; ०वति C, K. 5 ०षडह इति is wanting in B. 6 Wanting in B. 7 Wanting in G1, G2, K. 8 ०पदुपकुर्मः B. 9 यथान्तरं B. 10 भवतीति C, J. 11 नाना wanting in G1, G2. 12 ०र्यासम् G1, G2, J. 13 ०तानेव G1, G2, J. 14 ०थिका० C, G1, G2, J, K. 15 त्रीणि अयनानि B; निधनानि K. 16 C repeats त्रीणि. 17 ०स्यन् G1, G2, J. 18 ०न्दिनान्त्यं C, K; ०न्दिनांहं G1, G2; ०न्दिनांत्यं J.

"एतत् पुरस्तात् स्तोमं चत्रसाम बृहति पृष्ठेऽभिरूपम्", तेन प्रच्युत-मिदं[1] यद्वासिष्ठ[2] षष्ठेऽहन्यनुगृह्णाति स्वरविभक्तेरनुग्रहाय ॥ १ ॥ Ārṣ. K. V. 37 b.

अथैते त्वाष्ट्रीसाम चान्धीगवं च तृतीयचतुर्थयोरह्नोर्व्यतिहरति ज्यहयो-
5 र्व्यतिषङ्गाय ।

[तत्र] ता एव देवताविभक्तयः ।
अथ सामान्तविभक्तयः ।
एतेषामेव द्रव्याणां तल्लिङ्गाः कल्पयेत ।
पञ्चमे तु निधनविभक्तिर्न विद्यते ।
10 षष्ठे चेडाविभक्तिः ।
तत्राभ्यावारयन्ति—
वार्हद्गिरं वानुकल्पयेत्, सौश्रवसं वा ।
उक्थानां ब्रह्मसाम कुर्यात् ।
गोष्टं षष्ठे तु कल्पयेदिति ।
15 तस्य त्रिकद्रुकाः स्तोमाः, षाडहिकानि तन्त्राणि ।
अस्ति हि पडहप्रवादः ।
अपि चैव[9] रहस्यब्राह्मणे दर्शयति—ज्योतिष्यायणो ज्योतिरुदयनः षड-हो‌ऽभिप्लव इति चैतरेयिणाम् ।
तान्[11]स्तु यदेवं प्रयुङ्क्ते, एवं ज्योतिष्प्रायणो ज्योतिरुदयनः षडहो भवति,
20 यथास्थानमितरावविति[12] ।
तत्र यान्यैकाहिकानि द्रव्याणि स्तोमानि[13] तानि ।
[ यानि षाडहिकानि तन्त्रान्वितानि तानि[14] । ][15]
यानि छान्दोमिकानि[16] त्रयान्तानि ।
त्रयस्ते[17] त्रय इमे लोकसम्मास्ते[18] लोकसम्मा[19] इमे बृहद्रथन्तरपृष्ठास्ते
25 बृहद्रथन्तरपृष्ठा इमे[20] इति ।
रूपांश्छान्दसान्यायन्त्यपि[21][22] च व्यावृत्त्यर्थानि[23] ।

1 षष्ठे० B; षष्ठमिरूप G1, G2, षष्ठिमि० J. 2 प्रस्तुत० G1, G2, J, K. 3 ०मिव० G1, G2, J. 4 ०ये च० J. 5 Wanting in B. 6 एष तेषा० G1, G2, J, K. 7 पृष्ठे B. 8 च C, G1, G2, J, K. 9 इरस० G1, G2, J. 10 G1, G2, J omit ऽभिप्लव ··· षडहो (line 19). 11 तान्सुमदे० C; K adds न. 12 ०मितरदिति C; ०मिराविति G1, G2, J. 13 ०मान्वितानि C, G1, G2, J. 14 Wanting in G1, G2. 15 Wanting in B. 16 छन्दो० C, G1, G2, J, K. 17 य० B. 18 Wanting in G1. 19 ०सम्मास्त C, G1, G2, J. 20 इमा C. 21 K repeats रूपा. 22 ०छान्दसान्या० C; ०छन्द० G1, G2, J, K. 23 G1, G2, J, K add च.

स्वोदिष्टां प्रथमस्याह्न आभीवीयां करोति ।
या ह्येतस्याभीवीया भवति न तस्या उत्तरेऽधीमहे ।
तस्याः शश्वन्माषशरावय उत्तरेऽधीयते।
तां ते कुर्वन्ति, आभीशवं चतुर्थे ।
5 नावमिकं कुर्यादिति धानञ्जय्यः ।
व्यावृत्तये पृष्ठ्याभिप्लवयोश्चातुर्थिकमेवेति गौतमः ।
एषैतस्याह्नः स्वरविभक्तिर्भवतीति भवतीति ॥ २ ॥

तृतीयः पटलः

" 'अभीवर्तो ब्रह्मसाम' इति । PB. 4. 3. 1; 18. 6. 14.
10 तस्य स्तोत्रीयविधिः—'यदितः समानꣳ साम भवत्यन्योन्यः प्रगाथः'
इत्यत्यन्तनानात्वम् । PB. 4. 3. 8.
'य आस्तुतं कुर्वते यथा दुग्धामुपसीदेदेवं तत्' इति प्रयुक्तप्रतिषेधः ।
PB. 4. 3. 11.

तस्यान्ववायः—
15 'पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते' इति ।" PB. 4. 4. 1;
LŚ. 10. 6. 1; Kalp. 1. 7.
अथातः प्रगाथायनानि—
"चतुःशतमैन्द्राः बार्हताः प्रगाथाः, दशतयीषु" तान् समामनामः ।
LŚ. 10. 6. 3. Kalp. 1. 7;
20 " 'तेषां चत्वारोऽन्यप्रस्थानां बृहद्रथन्तरकालेयस्तोत्रीया अहरहः शस्यन्ते ।'
cp. LŚ. 10. 6. 4.

इन्द्रक्रतुरौत्तरपक्षिकः ।
शतमतिशिष्यते ।
'तेषामेकं चतुर्विꣳशे कुर्यात् ।' LŚ. 10. 6. 5
25 नूनꣳ शतमतिशिष्यते ।
सप्ताशीतिः सतोबृहत्यः ।
ते 'एकोनत्रिꣳशत् सतोबार्हतास्तृचाः ।' LŚ. 10. 6. 6.

---

1 स्वनिष्ठां J. 2 अभीवीयं G1, G2, J. 3 ०स्याह्न आभी० C, G2, J, K; ०तस्याह्न अभी० G1. 4 नान्ते कु० G1, G2, J, K. 5 एवैत० C. 6 Wanting in G1, G2, J. 7 In B only. 8 ०दितिः J. 9 Omitted by C. 10 ०यतानि C. 11 दा० B. 12 समामनेन् C; समामेन G1, J; समामने G2, K. 13 ०स्थानाद् B. 14 शतस्य G1, G2, J, स्य K. 15 ०न्ते J, K. 16 न्यूनꣳ B, K. 17 समति० B; शतमिनि० G1, G2, J. 18 एकेन न त्रि० C, G1, G2, J. 19 श्लोकोबा० B.

तेषामिहैकविंशतिमाहरति ।
तद्विंशतिशतं सम्पद्यते ।
'विंशतिशतं पञ्चानां मासानामाभिप्लविकान्यहानि भवन्ति ।' cp. LŚ. 10. 6. 8.
5 तेष्वेतान् प्रगाथान् प्रयुञ्जीत ।
'तृतीये[3] तृतीयेऽहनि सतोबृहतीः कुर्वन् य एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्मिन् द्वे[4] सतोबृहती कुर्यात् ।' " cp. LŚ. 10. 6. 7, 8. Kalp. 1. 7.
तृतीयपञ्चमयोरह्नोर्न हि प्रगाथा अनुभवन्तीति ।
10 ततं[5] ऊर्ध्वं छन्दसी संयुज्यात् ।
"औष्णिहे तृच एकां गायत्रीमुपदध्यात् ।" cp. LŚ. 10. 6. 9.
सतोबृहत्यतिशेषं समाप्येत्येव[6] गौतमः ।
"अष्टौ सातोबार्हतास्तृचा अतिशिष्यन्ते, तान् प्रथमे चाभिप्लवे कृत्वा द्वितीयस्य च[7] ष्ठाहे तत ऊर्ध्वं छन्दसी[8] संयुज्यादिति ।" cp.
15 LŚ. 10. 6. 10
" 'चतुरुत्तरैरेव छन्दोभिरेतव्यम्' इति । PB. 4. 4. 5; LŚ. 10. 6. 12.
'गायत्र्यां चतुर्विंशेऽभीवर्त्तं कुर्यात् ।
उष्णिहि प्रथम आभिप्लविके, अनुष्टुभि द्वितीये ।' cp. LŚ. 10. 6. 12.
तत ऊर्ध्वं बृहत्या पञ्च मास इत्वा य एष पञ्चमस्य मासस्योत्तमोऽ-
20 भिप्लवस्तस्य 'पञ्चमेऽहनि पङ्क्तीः कुर्यात्, अपि वा षष्ठे, तत ऊर्ध्वं त्रिष्टुभ्युत्तमे स्वरसाम्नि जगत्यामिति ।' cp. LŚ. 10.6. 13, 14, 16.
अत्रापि सतोबृहत्यतिशेषं समाप्येत्येव[9] गौतमः ।
'नव सातोबार्हतास्तृचा अतिशिष्यन्ते, द्वौ च प्रगाथौ' तान् प्रथमे चाभिप्लवे[11] कृत्वा द्वितीयस्य पञ्चाहे पङ्क्तीः" षष्ठे वा, तत ऊर्ध्वं
25 त्रिष्टुभ्युत्तमे स्वरसाम्नि जगत्यामिति ॥ ३ ॥ cp. LŚ. 10. 6. 17; Kalp. 1. 7.

---

1 ०शतं०स० G1. 2 ०ष्वा० B. 3 Wanting in B, C. 4 द्वयोः B, द्वयी G1, G2, J; द्वयीः K. 5 Wanting in G1, G2. 6 ०माप्येति C, समायाति G1, G2, J; समायेति K. 7 ०त्ते G1, G2, J. 8 Wanting in C. 9 ०मि B 10 सानो० C, G1, G2, J. 11 ०व G1, G2, J. 12 ०वा G1, G2, J, K 13 पञ्चमे K. 14 Wanting in C, G1, G2, J, K.

"छन्दःसंयोगे[1]रूपोऽधविधि[2]स्तत्स्थाने चातुरुत्तर्यम् ।
मासशब्दवैयर्थ्यमिति चेत् 'पञ्चसु[3] माःसु[4]' इति यथा पृष्ठ्यायने[5]ऽपवादस्त्तं[6]-
ल्लिङ्गेन · दद्राणवै[7]तीषन्न च मासान्तर[8] एतत् कर्मास्तीति । PB. 4. 4. 1.
5 एकदेशे यथा कालकृतौ[9] लोके कृतमिति ।
'बृहत्या चैव त्रिष्टुभा चैतव्यम् इति ।'" PB. 4. 4. 8; Kalp. 1. 8.
"त्रिष्टुभि चतुर्विंशेऽभीवर्त्त[10] कुर्यात् ।
बृहत्यां प्रथम आभिप्लविके"[11] त्रिष्टुभि द्वितीये ।
एवमनुपूर्वं छन्दसोः[12] प्रयोगो भवतीति ।
10 तत[13] ऊर्ध्वं व्यत्यसेद् ।" Say. PB. 4. 4. 10.
बृहतीत्रय एव तन्मन्य इति शौचिवृक्षिः ।
बृहत्या पञ्च मास इत्वा य एते "अष्टौ सातोबार्हतास्तृचाः" अतिशिष्यन्ते,
ये चैते त्रयोऽन्यत्रस्थानौ[14] बृहद्रथन्तरकालेयै[15]स्तोत्रीयास्तैः षष्ठे मासि
त्रिष्टुभो[16] व्यत्यसेत् । Kalp. 1. 7.
15 यदह्नः कालेयस्य[17] स्तोत्रीयेऽभीवर्त्त कुर्यात् ।
'तरणिरित्सिषासति' इति । SV. 1. 238; 2. 217; RV. 7. 32. 20; PB. 12. 4. 4.
कालेयमांस[18]ञ्चारात् ।
यदह्नो[19] रथन्तरस्य बृहत्[20]स्तोत्रीये रथन्तरं स्यात् ।
20 अपि वा स्वरसाम्नोरन्यतरस्मिन् रथन्तरस्तोत्रीयं[21] कुर्यात् ।
अत्र ह्यन्यासु रथन्तरं भवतीति ।
अथ त्रयस्त्रिंशत् प्रगाथाः ।
तेषामेकं[22] चतुर्विंशे कुर्यात् ।
सातोबार्हतं त्रयस्त्रिंशायने[23]ऽभिप्रयुञ्जीत ।

---

1 ०ग आपो० B; ०गं रू० G1, G2, K. 2 ०वियेत० B. 3 पञ्च B. 4 मासा इति B; मांस्स्वति G1, G2, J; मांस्स्विति K. 5 ०पृष्ठयेय० B, G1, G2, J. 6 ०स्तु लिङ्गेन C, J, K; स्तु लिङ्गे G1, G2. 7 दद्राणश्च B; रुद्राण० G1. 8 समान्तरये तद् क० C; मासान्तरये तद् क० G1, G2, J, K. 9 अकाल० B. 10 G1, G2, J omit अभीवर्त्त ··· कुर्यात्. 11 C, K add ऽपि च (वा K) बृहत्यामेव चतुर्विंशे बृहत्यां प्रथम आभिप्लविके. 12 ०र्वं छ० B, G1, G2, J. 13 G1, G2, J, K add ते. 14 ०नाद् B. 15 ०कालेये स्तो० G1, G2, J. 16 त्रैष्टुभो C. 17 ०यः G1, G2, J. 18 ०यं स० B; ०यमसं० K. 19 ०ह्ना G1, G2, J, K. 20 बृहत्स्तो० G1, G2, J. 21 ०या G1, G2, J but G2 corrects it. 22 ०षमेकं च० C, G1, G2, J, K. 23 ०शानयने B.

अपि वा न सतोबृहतीराद्रियेत, य एव चतुर्विंशे तमनुसंहरेदिति ॥ ४ ॥

एतेनैवोत्तराणि[1] [ द्व्याणि[2] ] व्याख्यातानि ।
आ द्विप्रगाथाद्[3] यार्थोकामी[4] पुरस्तात् प्रगाथानां[5] स्यात्, तथोपरिष्टादिन्द्र-
5　　क्रतौ सामानि प्रकल्पयेत्[6] ।
तावन्ति तच्छन्दस्यानि[7] निधनवन्ति[8] ।
यदि तच्छन्दस्यानि न विद्येरन्नपि वैच्छन्दसानि[9] कुर्याद् यान्यभिरूपाणि स्युर्गीतितश्च निधनंतश्च[10] ।
कतम एषां कल्प इति ।
10 प्रथमौ प्रतिपिद्धौ[11]वित्याहुः ।
अथेतरे सर्वे[12] कल्पाः ।
अपि वा द्विप्रगाथमेव कल्पः स्याद् ।
दोषदर्शी नूनं पूर्वानि[13]त्यक्रमीदिति ।
ते कस्य हेतोः ।
15 षट्प्रगाथमयनं समारप्स्यन्तीति ।
नेदं षट्प्रगार्थं[14]मिति शाण्डिल्यायनः ।
यः षट्प्रगाथं चिकीर्षेन्न सतोबृहतीराद्रियेत ।
ये[15] एवं[16] चतुर्विंशे तमनुसंहरेदिति ।
स खल्वयमभीवर्त्तः[17] षट्प्रगाथान[18]धितिष्ठति ।
20 पूर्वस्मिन् एतसि द्वयोश्च सतोबृहतीः[19] ।
एवमेवेन्द्रक्रतूत्तरे[20] पञ्च प्रगाथिकानि, द्वे सांतोबार्हते[21], विकर्णमष्टमम् ।
एवमनयोः समाधिरिति ।
अथैतत् सुज्ञानमौष्णिहमाविषुवतः सर्वत्र पृष्ठ्यपञ्चाहवर्जम्[22], अतिरात्रा[23]श्च यथाकामकल्प्यत्वादेतेषामह्ना[24]मिति ।

25 एतदभिप्लवस्य राथन्तरेष्व[25]हस्सु विचार्यते ।

---

1 G1, G2, J add ओं. 2 Wanting in B. 3 G1 omits द्᠁प्रगाथानां. 4 यथाकारी C, G2, J, K. 5 ०थान्स्मात् C, J, K. 6 प्रतिकल्प० C, G1, G2, J, K. 7 छन्द० G1, G2; न छन्द० J. 8 निधनवन्ति ⋯ ०स्यानि wanting in G1, G2. 9 C, G1, G2, J, K omit वै. 10 ०नंत० G1, G2, J, K. 11 ०षिध्या० G1, G2. 12 सर्वे G1, G2, J. 13 पूर्वान्यत्य० K. 14 ०था० G1, G2, J. K. 15 B adds अपि वा. 16 एत G1, G2, J. 17 ०भि० G1, G2. 18 ०सिद्देश्च C, G1, G2, J, K. 19 ततोबृहतीम् B. 20 ०क्रतुरुत्तरे C, G1, G2, J, K. 21 सतो० C. 22 ०वर्ज्यम् B; ०वर्जं G1, G2. 23 ०त्रायथा० C, G1, G2, J 24 ०ह्नां तदभि० C, G1, G2, J, K. 25 ०रेष्व० G1. G2. J.

पृ[1]ष्ठे चै[2]वमिव षडहे नानास्वस्त्यै[3]यनानि भवे[4]न्तीति।
"पृष्ठ्यमेवँ छिन्दन् व्यूहेत् समूहेदिति।
व्यूर्ढः[6] स्यादिति शाण्डिल्यायनः।" Ārs. K. V. 108 b.
एवमस्यापि[5]दर्शनं भवति।
5 अथाप्येवं पुराणमाचार्यवचँ[7] इति।
समूढः स्यादिति धानञ्जय्यः।
एष न्यायः।
एवꣳ हि ज्योतिष्टोमः, एवं दशरात्रस्य प्रथमस्त्र्यहः, एवं दशमम्,
एवमहीनैकाहा इति।
10 अथापि समूढ एव पूर्वमुत्पन्नोऽपरो व्यूढः।
एवꣳ हि रहस्यब्राह्मणे दर्शयति, एवमिव ब्राह्मणं भवति, छन्दाꣳसि वा।
अन्योन्यस्य लोकमभ्यध्यायन्नित्युत्पन्नस्य लोको[8] नाम भवति ॥ ५ ॥
अथापि विलुप्तो व्यूहः[9]।
षडहेन हि त्रिष्टुभः प्रतिपत्तां[10] भॆजन्ते[11] न जगत्यो मा[12]ध्यन्दिनान्तान्न
15 गायत्र्य आर्भवान्तान्।
यत्रैवं[13] खल्वेतच्छन्दाꣳसि विप्रच्युत्य दशमेऽहनि सम्प्रकल्पन्ते तत एव
व्यूहः सिध्यतीति।
"तदप्येवमिव ब्राह्मणं भवति—'नर्ते छन्दोमेभ्य पृष्ठो व्यूहमानशः'
इति।" Say. PB. 23. 1. 5.
20 अथापि समूढेन षडहेन सम्प्रयुक्तो भवतीति।
तस्यैके प्रत्नवद् बहिष्पवमानं कुर्वन्ति।
न होता व्यूहकारिता इति।
नवाहयोगा इमा भवन्तीति धानञ्जय्यः।
कथमसमापयिष्यन्नवाहं नवाहयोगाः[14] कुर्यादिति।
25 तत्र नित्यावु[15]पवत्ताविमावभिप्लवन्यायेन, पार्थे[16] द्वितीयस्य माध्यन्दिनान्त्यम-
भिप्लवन्यायेन[17], नित्याभिः समूहति—नित्योऽयं षडह इति।
तत्र तान्येव सामूहिकानि यान्यभिप्लवे।
जनित्र[18]मेवैतदन्यत्।

1 षष्ठे G1, G2, J, K. 2 श्रैव० C. 3 ०स्वर्णिधनानि C, G1, G2, J, K. 4 भविष्यन्तीति C, G1, G2, J, K. 5 ०मपि B. 6 व्यूहः K. 7 ०वचत B. 8 लोकानां य० B. 9 व्यूढः C. 10 ०त्तां C, G1, G2, J, K. 11 लभते C, लभन्ते G1, G2, J, K. 12 मध्यम दिनान्ता न B. 13 ०वं C, G1, G2, J. 14 ०गाद् B. 15 नित्यावुपपन्नौ कविमानभि० C; नित्यावुपवल्लोकविमानभि० G1, G2, J, K. 16 ०र्थे B. 17 ०न्या० B. 18 जनित्राण्येवमे० C; जनित्रामेवैदन्य G1, G2, J.

तदे[1]तत् स्वयो[2]निका[3]माः कारयन्तीति ।
कथं पृष्ठ्ये[4]ऽभीवर्त्त[5] इति[6] ।
अकर्तव्य इति शौचिवृक्षिः ।
"पञ्चसु मासु बार्हताः प्रगाथा आप्यन्ते" इति[7] । PB. 4. 4. 13; LŚ. 10. 6. 1.
5
अन्यतः[8] पृष्ठ्यादेवैपाप्तिः सिध्यतीति ।
कर्तव्य इति गौतमः ।
यत् सामावसृजेयुरवस्वर्गाल्लोकात् पद्येरन्निति हि भवतीति ।
पृष्ठ्ये वाऽस्यैतत् सतोऽवादीत्[9] ।
10 नह्येनं केचनाभिप्लवाच्च्यावयन्तीति ।
तत्रं[10] बृहतीषु कालेयं[11] द्वितीयमनुकल्पयामः ।
सन्तानरूपमस्मिन् भवतीति ।
कथमभिजितीति ।
अकर्तव्य इति शौचिवृक्षिः ।
15 कर्तव्य इत्येव गौतमः ।
तत् पृष्ठ्येनैव व्याख्यातम् ।
अथाप्येष एवं क्लृप्त एवैकाह[12] आगच्छत्यभीवर्त्तमध्यन्दिन इत्यभीवर्त्त-मध्यन्दिन इति ॥ ६ ॥

चतुर्थः[13] पटलः

20 अथैते स्वरसामानः ।
तानग्निष्टोमा[14]नाह[15] ।
नवाहकारिणः कुर्युरु[16]क्थान् एकविंशत्यहः[17]कारिणः ।
योऽन्यथा कुर्यादकुशलः पुरुष इति विद्यात् ।
अथैषां[18] बृह[19]त्स्तोत्रीया आनुष्टुभा एकबृहतीकाः ।
25 अनुष्टुभौ पूर्वे राथन्त[20]रीयौ बृहत्युत्तमे[21] ।
एतदेव विपरीतम् ।

---

1 तदू० G1, G2, J. 2 सयो० B. 3 ०कामः कारयतीति C, G1, G2, J, K. 4 पृष्ठे० C, G1, G2, J, K. 5 ०र्त्तं B. 6 G1, G2, J omit इति । अकर्त. 7 इत् G1, G2, J. 8 एते C, प्रते G1; पृते G2, J, K. 9 ०दोह्येन केन च ना० B. 10 तं खलु C, G1, G2, J, K. 11 कालेय C, J, K; काले G1, G2. 12 एवैनकदाह G1, G2; एवैनदाह K. 13 In B only. 14 ०ग्निहोमा० B; ०मान् J. 15 ०नह B, G1, G2. 16 कुरुक्थान् G1, G2, J; ०क्थान् K. 17 ०हका० C, G1, G2, J, K. 18 ०थैनां J. K. 19 पृष्ठन्तोत्री० C; पृष्ठस्तो० G1, G2, J, K. 20 ०रयोर्बृ० C, G1, G2, J, K. 21 ०मेनि C, G1, G2, J.

द्वितीये चतुर्ऋचं[1] तृतीयस्य भवति ।
तासां तृतीयामुद्धृत्य चतुर्थीं[2] तृतीयां[3] कुर्मः ।
एषा बृहती भवति[4] ।
अथ यत्रासु षोडशी[5] साम भवति सर्वास्तत्रानुष्टुभो भवन्ति ।
5 तत्र[6] खलु बृहद्रथन्तरे[7] करोति, स्वाराणामेव पृष्ठत्वे तिष्ठमाने[8] ।
अथ स्वाराणि[9] ।
आनुष्टुभान्यनुष्टुप्स्विति ।
तत्र यान्येकाहिकानि द्रव्याणि पृष्ठान्वितानि तानि[10] ।
यानि षाडहिकानि तन्त्रान्वितानि तानि[11] ।
10 यानि छौन्दोमिकान्यभिप्लव[12] एव तानि व्याख्यातानि ।
क्षुल्लकवैष्टम्भं[13] प्रथमेऽहनि करोति ।
द्विर्गनुप्रहायाऽदिकमत्र[14] स्वरं भवति ।
तेन प्रच्युतं[15] संहितं तृतीयेऽहन्यनुगृह्णाति ।
पक्षयोः[16] सन्तानाय विकल्पयन्ति, मनुष्टुभो मध्ये निधना[17]न्यैडान्यांजिघृ-
15 क्षन्तः[18] ।
स खलु विकल्पयन् स्वाराण्यन्त्यानि[19] कुर्यादविकल्पयन्नैडानि[20] ।
विकल्पयन्तश्चोते[21] हैके विकल्पयन्तश्चैडान्येव कुर्वन्ति ।
तृतीयसवनक्षात्रेण विकल्पयंस्त्वेव स्वाराण्यन्त्यानि[22] कुर्यादविकल्पय-
न्नैडानि[23] ।
20 वसिष्ठस्य प्रियं चतुर्थाद् यार्थातथ्यात्[24] प्रत्याहरति ।
तैरश्च्यं[25] वेति[26] विचारयन्ति ।
उद्वंशीयं[27] धर्मिहानुगृह्णाति ।
आमहीयवं द्वितीयात्प्रच्युतं तृतीयेऽहन्यनुगृह्णाति ।
एतत्[28] स्वयोनि भवतीति ॥ ७ ॥

---

1 ०र्ऋचस्तृ० B. 2 G1, G2, J, K add तु. 3 ०या कु० J. 4 भवतीति G1, G2, J, K. 5 ०शिन G1, G2, J; ०शिनं K. 6 यत्र J, K. 7 C adds वै. 8 ०ने G1, G2, J. 9 B adds अनुष्टुप्सु; K adds आनुष्टुप्सु. 10 Wanting in G1, G2, J. 11 Wanting in G1, G2, J. 12 छन्दो० B, C, G1, G2, J. 13 कल्पकवे० B; क्षुल्लकवे( ०वै J )ष्टभं G1, G2, J. 14 ०महायादिकमत्र C; गनुमहाया इदिक० G1, G2. 15 ०तं हितं C. 16 ०क्षसोः C. 17 निधना is wanting in G1, G2, J. 18 ०न्यनिघृक्षु० G1; ०न्यजि० G2, J, K. 19 स्वराण्यन्त्यानि B. 20 G1, G2 omit विकल्पयन्नैडानि. 21 ०श्चो B. 22 ०न्त्या G1, G2, J. 23 ०न्नैडानि C, G1, G2. 24 याथान्तर्याद् C, G1, G2, J, K. 25 ०श्चं B. 26 वेति B. 27 ०शीयवाधर्मि० C, G1, G2, J, K. 28 एतत् C, G1, G2, J, K.

अथैष विषुवान्—

तत्र खलु बृहद्रथन्तरे करोति शुक्रियाणामेव पृष्ठत्वे तिष्ठमानः।

अथापि स्वर्गोक्तो विषुवान्, तत्र स्वर्गोके बृहद्रथन्तरे अचिकीर्षीत्[1]।

ते[2] यत् पवमानयोर्निर्दधात्येतदेनयोरपयतोः[3] स्थानं भवति।

5 ते यद् बृहत्यां चानुष्टुभि[4] चैतौ[5] नेदिष्ठिनौ[6] चातुष्पदावावापाविति।

तत्र खलु गोस्तन्त्रं करोति।

एतदन्ततन्त्रतरम्।

अन्तविधोयं[7] भवति मध्यचरः[8]।

तत्र यान्यन्तलक्षणानि मध्यलक्षणानि[9] ज्योतिर्विधानि शान्तिविधानि[10]

10 शुक्रियसदृशान्यभिरूपाणि तानि।

अथ[11] खल्वत्रानुष्टुभः प्रतिपदः करोति।

यथैतद् ब्राह्मणम्—उपवती[12] वयं परमेऽहनि परमां प्रतिपदं कुर्मः।

यान्यन्यानि बृहद्रथन्तराभ्यां पृष्ठानीति ह स्माह शाण्डिल्यायनः।

उपवत्येव तेषां कुशलेनोपोह्येव तानि बृहद्रथन्तरे इति।

15 अथाप्यात्मोक्तो विषुवान्, तं प्राणोक्त्या गायत्र्या प्रत्यपित्सीद्[13], दान्तोऽनादान्तमिति वा।

'वात आ वातु' इति मौपदारावयः। SV. 1. 184; 2. 1190; RV. 10. 186. 1; LŚ. 4. 6. 21.

'अग्निरिन्द्राय पवते' इति शुक्लाः। cp. SV. 2. 1175; LŚ. 4. 6. 20.

20 तस्या उत्तरे उपवती[14] चाग्निवती च[15]।

तत्रैके नाभीवर्त्तं कुर्वन्ति।

पौर्वपक्षिकोऽयं भवति।

अथाप्येव[16] सुज्ञानेन समाधिरिति।

मध्यन्दिने वयं कुर्मः।

25 एवमिव[17] ब्राह्मणं भवति—"तावुभौ विषुवति कार्यौ" इति। PB. 4. 7. 1.

यद्वेतत् सुज्ञानेन समाधिरिति, आर्भवचरं तद्भवति।

---

1 तत B. 2 °कीर्षीद् G1, G2, J, K. 3 ये G1, G2, J, K. 4 °योः स्था° K. 5 °भी G1, G2, J, K. 6 °ष्ठेनौ G1, G2, J. 7 अन्तं विधेयं C. 8 °चरः K. 9 Wanting in C क; °न्यन्ज्यो° C ख, °ना G1, G2, J. 10 °र्वि° G1, G2, J, K. 11 अत्र G1, G2, K. 12 उपनीं G1, G2; उपवयन्ती K. 13 °त्सीद्दान्तेन दान्तमिति वा B; °पित्सि (°त्सीK) द्दां भांदांतमिति व (वा K) G1, G2, J, K. 14 °वेना G1, G2, °वावेना J. 15 B adds वा. 16 °वीती G1, G2, J. 17 Wanting in G1, G2, J, K. 18 °मेव G1, G2, J.

नो पौर्वपक्षिकमूर्ध्वं पृष्ठादचिकीर्षीत् ॥ ८ ॥

अथ खल्वाह—त्रिष्टुब् जगतीषु भवतीति ।

कस्येदं ब्राह्मणं स्यादिति ।

पृष्ठाग्निष्टोमसाम्नोरित्याहुरेके[1], कल्पाख्याते न[2] भवत इति ।

5 अथाप्याहुः—त्रिष्टुभ एवैमौ जगद्वृत्तयो भवन्तीति ।

अथाप्याहुः—त्रैष्टुमजागतादेवेमाः सूक्तादाहृता भवन्तीति ।

अथाप्याहुः—जागतमेवात्रैकं पदं भवतीति ।

अपि वा सम्पद एव ब्राह्मणं स्यात् ।

अपि वा योनिवादश्च कर्मवादश्च स्याज्जागतं हि सत् त्रिष्टुप्सु कियत

10 इति ।

समसितव्यास्त्रिष्टुब्जगतीर्मन्य इति कौत्सः ।

त्रिष्टुब् जगतीषु भवतीति सति किमन्यत् समासादिति ।

आवृत्ते पृष्ठ्येऽभीवर्त्तलोके सामानि प्रतिकल्पयेदिति गौतमः ।

एवं च पक्षसोः समाधिः ।

15 अपि चैवं ससामेन्द्रक्रतुरनुगृह्यत इति ।

तत्रैतेषामेव चत्वारि यान्यभिप्लवे वासिष्ठगौङ्गवे च ।

द्वितीयप्रथमयोरह्नोः शुद्धाशुद्धीयं वेति[10] विचारयन्ति शाण्डिल्याः ।

एतदक्षरनिधनं भवतीति ।

नाद्रियेतेति शौचिवृक्षिः ।

20 तदभीवर्त्तेनैव व्याख्यातम् ।

अथापि नित्यान्येवाभिरूपतराणीति ।

इन्द्रक्रतुमस्तूयमानमनुदांसयन् सामानि प्रतिकल्पयेदिति गौतमः ।

जनित्रं विश्वजिति ।

यानि पृष्ठ्येऽभीवर्त्तलोके तानि दशरात्रिके पृष्ठ्ये ।

25 तेषां चत्वारि छन्दोमेषु, यथाभागं यथापृष्ठं पौरुमीढं व्रतेन क्षात्रेण, श्यैतं वा तन्त्रक्षात्रेण, एवं खलु कुर्यात्, नवाद्रियेत, आसामानमिन्द्रक्रतुमनुशंसयितुमिति ॥ ९ ॥

---

1 पूर्वं॰ C, G1, G2, J, K. 2 ॰रेते C, G1, G2, J; K omits from एके to प्याहुः (6th line). 3 C, G1, G2, J omit न. 4 एव मा B. 5 जगद्वृ॰ C, G1, G2, J. 6 पृष्ठ्ये॰ G1, G2. 7 स मामेन्द्र॰ C; स मामैंद्र॰ G1,G2, J, K. 8 ॰ष्ठागौ॰ C, J; ॰ष्ठागौंगवे G1, G2. 9 G1, G2 add प्रथम. 10 चेति C. 11 शाण्डिल्यः C, G1, G2, J, K. 12 ॰स्तु॰ G1, G2, J. 13 दाश॰ J, K. 14 व्रते तद् B. 15 रात्रेण J. 16 नावा॰ J, K. 17 सा॰ B. 18 ॰श्यास॰ B.

अथोपदशरात्रं सम्भरतां पूर्वे[1] पक्षसि विचारो भवति।
अतिरात्रचतुर्विंशे त्रीनभिप्लवान् पृष्ठ्यमिति कृत्वा पञ्चायनमासानुपेयुः।
अभिजित्स्वरसाम्नो [नं[2]] त्रिंशत्तमां[3]मुपसम्भरन्ति।
अथैतं दशरात्रमेकं[4] आवर्त्तयन्ति, आवृत्तिसाधूत्तरं पक्ष इति।
5 न वयमावर्त्तयामोऽनुपेतं[5] पूर्वे[6] पक्षसि तं कस्मादावर्त्तयामेति।
अथापि नियुक्तमानसो भवति।
यद्[7] हैनमृते मानसादावर्त्तयिष्यद् दशमं च मानसं च[8] व्यद्वेष्यत्।[9]
अपि चाकृतेन दशरात्रेण मानसमभ्यशाययिष्यत्।
[सं[10]] कस्य हेतोः।
10 अ[11]कृतेन[12] व्रतेन[13] मानसमधिशाययतीति।
व्रतसंबन्धात्[14] प्राजापत्यं[15] एतं[16] प्राजापत्यं मनः सर्वाप्तिव्रतं सर्वाप्तिमनः।
तदपि शश्वत् सांवर्गजिता गौतमा[17] उपरिष्टाद् व्रतस्य मानसमधीयते—
मां[18] कृतेन व्रतेन मानसमधिशीया[19]मेति।
सामान्यात्तु[20] वयमधिशाययन्तो[21] मन्यामहे।
15 अथैतान्[22]यद्विपन्त्य[23]हानी[24]त्याचक्षते।
अतिरात्रचतुर्विंशे नवाहं गोआयुषी दशरात्रं व्रतातिरात्रेऽक्षयणादनपक्रमणाद्धेत्यनपक्रमणाद्धेति ॥ १० ॥

पञ्चमः[25] पटलः

अथातः संवत्सरां[26] वर्गाणाम्।
20 पञ्च संवत्सरा[27] वर्गाः।
तेषु[28] धीरो मनीषया कर्मण उपसदो[29] विद्यात्।
सर्वासु[30] विधिषु व्रतानि च, षड्त्रिंशोनो नवोनश्च षडहोनः[31]।

1 पूर्वं॰ G1, G2, J. 2 Wanting in B, त्रव G1, G2, K, तव J. 3 ॰त्तमनुपसंहरन्ति B. 4 ॰कं B. 5 ॰तः B. 6 पूर्वं॰ J. 7 यद्यु C, G1, G2, J, K. 8 चरद् व्यवयिष्यत् C, चरंव्यवयिष्यत् G1, G2, K; चरंयवयिष्यत् J. 9 C adds यद्यु वै स मानसं व्रतं च मानसञ्च व्यवयिष्यत्; G1, G2, J, K add यद्यु वै समानवृत (॰व्रतं K) च व्यवयिष्यत्. 10 Wanting in B. 11 अनुकृ॰ B. 12 ॰वे G2. 13 Omitted by G1; कृतेन G2, J. 14 ॰साबन्धवत् B, ॰सानं बंधवात् G1, G2, J, K. 15 प्रजा॰ G1, G2, J. 16 Wanting in G1, G2, J. 17 गोतमाः C, G1, G2, J, K. 18 प्राकृ॰ C. 19 ॰धिशेषयामेति C; ॰भिशोचयामेति G1, G2, J, K. 20 ॰द्रु G1, G2, J, K. 21 ॰न्त B. 22 ॰वा॰ G1, G2, J, K. 23 ॰क्षीय॰ B. 24 ॰हनीत्याचक्ष्यते॰ G1, G2, J. 25 In B only. 26 ॰वत्सरापव॰ B. 27 ॰वत्सरापवर्गाः B. 28 ॰व्वषी॰ B. 29 उपदो G1; उपपदो G2, J, K. 30 ॰स्या वेषु C, G1, G2, J, K. 31 ॰डोहोमः G1, G2, J, K.

अथ सावनः—

अथाष्टादशभिर्ज्यायानहोभिः सावनात् परो नक्षत्रमितमासश्च[1]।

तस्य चैवं[2] त्रयोदशी, चान्द्रमसः सावनश्चोभौ[3]।

अथा[4]ष्टादश्युत्तमोऽष्टासप्तत्रिंशशतं पौर्णमास्यां प्रसाधयेत्।

5 गवामयनस्योपायां[5]श्चतुरः प्रतिपादयेत्।

तेषां ना[6]क्षत्रः प्रथमः[7], तस्य सप्तविंशिनो मासाः[8], सप्तविंशतिर्नक्षत्राणीति[9]।

तस्य कल्पः—

प्रथमस्य प्रथमस्याभिप्लवस्य स्थाने त्रिकद्रुकत्र्यहं[10] कुर्यात्।

प्राग्विषुवत उत्तमस्योत्तमस्योर्ध्वं विषुवतः।

10 ते खल्वभिप्लवतन्त्र[11] एव क्लृप्ताः स्युरित्येके।

एते चेहा[12]धिकृताः।

नै[13] चापि निवर्तयति।

अथापि दृश्यते—त्र्यहस्त्र्यहतन्त्रे क्लृप्तो यथा स्वरसामा[14]नस्त्रिकद्रुकपञ्चाहश्चाभिप्लवतन्त्रे सप्तदशरात्रे स्वतन्त्रा इति।

15 अपरमेवं च तन्त्राविलोपः।

अपि च सत्रेषु त्रिकद्रुकत्र्यहः स्वतन्त्रो भवति।

अथ नवोनः—

एतस्यै[15]व त्रयोदश मासाः[16]।

सम्भार्ययोर्मासयोर्नवाहं लुम्पेत्।

20 चतुरहमेव प्राग्विषुवतः पञ्चादमूर्ध्वम्।

तस्य कल्पः—

प्रथमस्याभिप्लवस्य स्थाने ज्योतिषं च गां च कुर्यात्।

प्राग्विषुवत ऊर्ध्वं विषुवत उ[17]त्तमस्याभि[18]प्लवस्य स्थाने ज्योतिषम्।

नात्र विषुवानभिभवति।

25 उत्तरे तु पक्षसि विषुवानुपसङ्ख्यायत इति।

अथ षडूनः[19]—

चान्द्रमसाः[20] षट् पू[21]र्णमासाः षडूनाः[22]।

---

1 ०मिदमा० C, G1, G2, J, K. 2 ०व C, G1, G2, J. 3 उन्मभौ० G1, G2, J. 4 अथाष्टादः स्युत्तमो० G1, G2, J; अष्टादः स्युत्तमो० K. 5 ०य० C, G1, G2. 6 न० C, G1, G2, J. 7 ०मस्य स० G1, G2, J. 8 ०साः स्तप्त० C. 9 ०त्राणामिति B. 10 ०यं त्र्य० K. 11 ०वक्ष B; ०वनंत G1, G2, J. 12 वेहानिकृता G1, G2. 13 नु चावि B. 14 स्वरत० C, G1, G2, J, K. 15 तस्यैवं C. 16 मासस्य B; मासः G1, G2, J, K. 17 J omits उत्तम० ··· ०स्यायत (line 26). 18 ०प्लुव B. 19 ०नाः C. 20 ०स G1, G2, J, K. 21 पूर्णमासाः षडूनाः wanting in C. 22 Wanting in K.

पूर्णो[1]पक्रमा ऊ[2]नावसानाः पूर्वे पक्षसि मासाः स्युः ।
ऊ[3]नोपक्रमाः पूर्णावसाना उत्तरे ।
तस्य कल्पः—
प्रथमस्य प्रथमस्याभिप्लवस्यं[4] स्थानेऽभिप्लवपञ्चाहं कुर्यात् ।
5 प्राग्विषुवत एतेषु[5] मासेषूत्तमस्योत्तमस्योर्ध्वं विषुवतः ॥ ११ ॥

व्याख्यातः सावनः—
स एष आदित्यसंवत्सरो नाक्षत्रः ।
आदित्यः खलु शश्वदेतां[6]वद्भिरहोभिर्न[7]क्षत्राणि समवैति ।
त्रयोदशाहं त्रयोदशाहमेकैकं नक्षत्रमुपतिष्ठति ।
10 अहस्तृतीयं च, नवधा कृतयोरहोरात्रयोर्द्वे कले[8] चेति[9] संवं[10]त्सराः ।
ताश्[11]चत्वारिंशच्चतुःपञ्चाशतं कलाः ।
ते षण्णववर्गाः सषड्[12]षष्टित्रिंशतः ।
षष्टित्रिंशते श्लोकौ भवतः—
सप्तविंशती रा[13]ष्ट्रस्य राज्ञो[14] वसतयो मिताः ।
15 त्रयोदशाहं[15]मेकैकं नक्षत्र[16]मुपतिष्ठति ॥
त्रयोदशाहानि तृतीयमह्न-
श्चतस्त्रेधा दशतयो[17]ऽपि कुर्वन् ।
त्रिणवं पन्थानं विततं पुराणं
चत्वारिंशता नवरात्रैः समश्नुते ॥ इति ।
20 अथाष्टादशभिर्ज्यायानादित्यसंवत्सर एव तैर्य[18]गयनिको भवति ।
आदित्यः खलु शश्वदेकदा षण्मासानुदङ्ङेति नव चाहा[19]नि ।
तथा दक्षिणा ।
तदप्येते श्लोका भवन्ति—
यस्मिन् वै परिवत्सरे सौर्यो मासोऽथ चान्द्रमः ।

---

1 ॰र्णो॰ G1, G2, J, K. 2 ऊना॰ ··· ॰क्रमाः is wanting in K. 3 नो॰ *G1, G2, J.* 4 स्यस्थानेऽभिप्लव is wanting in G1, G2. 5 ऊनेषु G1, G2, J, K. 6 ॰ता भवद्भिरहेभि॰ G1, G2, J. 7 अपह॰ G1, G2, J. 8 काले B; कला G1, G2, J, K. 9 चेति G1, G2, K. 10 सांव॰ C, G1, G2, J, K. 11 ॰श्चाचतुष्प॰ G1, G2, J, K. 12 षषष्टि॰ G1, G2, K. 13 ॰शतिरा॰ B; ॰रातांरा॰ G1, G2, J. 14 ॰क्षोपसत॰ B; ॰वस॰ G1, G2, J. 15 ॰हं त्रयोदशाहमेकैकं C, G1, G2, J, K. 16 ॰मुपतिष्ठति is wanting in G1, G2. 17 ॰यो विकुर्व॰ C, G1, G2, J, K. 18 ॰गणय॰ G1, G2, J, K. 19 ॰हनि J.

नाक्षत्रो न विलुप्यते ।[2]
सप्तविंशतिमेवैषः सप्ताहानेति दक्षिणा ।
तथोदङ् सप्तविंशतिमिति ।
तस्य कल्पः—
5 सम्भार्ययोर्मासयोरष्टादशाहान्युपाहरेत् ।
नवाहमेव प्राग् विषुवतो नवाहमूर्ध्वं त्रिकद्रुकांश्चाभिप्लवं च प्राग् विषुवतोऽभिप्लवं च त्रिकद्रुकांश्चावृत्तानूर्ध्वं विषुवतः ॥ १२ ॥
कथमनाहिताग्नेः सत्त्रासनमिति ।
न विद्यत इति शाण्डिल्यायनः ।
10 सर्वे[4] ह्यग्रप्रथमयज्ञाः पृथक् सत्त्रोपकरणानीष्ट्वा[5] समाप्याग्नीन्सत्त्रमासित्वो-[6]दवसायान्यानृत्विजो वृत्वा पृथक् पृष्ठ्यशमनीयैर्यजेरन्निति नो विधानम् ।
यथा त्विदमद्य सत्त्रिणो भवन्त्यहीनयाजका इमे कृष्णाजिनकण्ठी भवन्ति ।
अथापि यः सत्त्रे करणाद् यजमानो मन्येत, अपि नूनं सोऽहीनैका-
15 हेष्वपि यजमानो मन्येत, तत्र ह्यपि करोतीति ।
यद्[12]दु वै यजमानशब्दाद् यजमानो मन्येत, अपि नूनं ये यजामह इतीष्टि-पशुबन्धेष्वपि[13] यजमानो मन्येत, तत्र ह्यपि करोतीति ।
अथाप्याह—'य एतेनानिष्ट्वा'[14] इति । PB. 16. 1. 2.
तदेतदनाहिताग्नौ[15] साधिष्ठमुपपद्यत इति ।
20 विद्यत इत्यपरम् ।
एवं च समारम्भः ।
अपि चैवं सूत्राणि भवन्ति—
स्थालीपाकैरनाहिताग्नयो[16] यजेरन्निति ।
अथापि दृश्यते पराग्निष्विज्या—यथा पुरोहितस्याग्निभिरध्वमनुचरन्तीति ।

1 लुप्यते B 2 C adds कः स्वित्त वेद काः स्विदष्टा सप्तनिः त्रिशते तस्मिन्त्संवत्सरे मिते सौर्यो मासोऽथ चान्द्रमसो नाक्षत्रो न विलुप्यते G1, G2 add कः स्वित्त वेद कः स विदृष्टा सप्तति त्रिशते तस्मिन्त्संवत्सरे मितो सौर्यो मासो नाक्षत्रो न लुप्यते; J, K add कः स्वित्तं वेद कः स विदष्टा सप्तनि त्रिशते तस्मिन्त्संवत्सरे मितो ( मिते K ) सौर्यो मासोऽथ चान्द्रमसो नाक्षत्रो न लुप्यते. 3 त्रिकाकर्तृश्चा० B; G1, G2 omit त्रिकद्रुका० ˙˙ ०प्लवं च. 4 दृष्ट० G1, G2, J. (K had originally द which is changed into ह). 5 सत्रो० ˙˙˙ वृत्वा wanting in G1, G2, J 6 ०णा अनिष्ट्वा B. 7 मोमोप्यग्निप्राधाय ह० B. 8 ०सान्दीयान्नानृ० C. 9 पष्ठ० C, पृष्ठ्य is wanting in J, पृष्ठ० K. 10 ०कर्णा B 11 ०हिनिका० G1, G2, J, K 12 यदु C, G1, G2, J, K. 13 ०सन्धे० B. 14 ०नानिष्ठ्वा C 15 ०दाहि० B 16 ०पाकैरनाहि० C, G1, G2, J, K

तदपि शश्वद्ब्राह्मणं भवति—यथा पररथेनाध्वानमियादेवमेष स्वर्गं लोकमभ्येति यः पराग्निषु दीक्षित इति ।
अथापि ब्राह्मणं भवति—तेषां ये पुरोडाशिनः स्युरपि ह्यपुरोडाशिनो भवन्तीति[1] वार्थो भवति ।
5 एतेनानाहिताग्नीनां[2] सत्रासनमुक्तम् ।
अथापि ब्राह्मणमेव भवति—तेषां ये[3] पुरस्ताद्दीक्षाणाः[4] स्युर्यद्यु वैषां गृहपतिरिति ।
अपि ह्यदीक्षाणा एव भवन्तीति[5] वार्थो भवति ।
एतेनानिष्टप्रथमयज्ञानां[2] सत्रासनमुक्तम् ॥ १३ ॥

---

1 ०न्तीतीवा० C, G1, G2, J. 2 Wanting in G1. 3 ०नादीक्षणा B, ०ादीक्षमाना: G1, G2, ०ादीक्षाणा: J; ०ादीक्षाणा: K. 4 ०यदीक्षणा G1, ०यदीक्षाणा G2, K. 5 ०तीतीवा० C, G1, G2, J, K.

# अथ षष्ठः प्रपाठकः

अथापि समाहारसिद्धिसत्त्वं भवति ।
तदेतत्समरूपमग्नयस्तावद्द्रव्याणि च ।
मन्त्रैर्वेयमिति ।
अथापि यदेतच्छाण्डिल्यायनीयं गृहपतिस्तदातिगृह्णीते ।
5 अथ कः पृष्ठशमनीयः स्यादिति ।
याथाकामी पथ्यानां दक्षिणावतामिति वार्षगण्यः ।
अनारभ्य वदति, तस्मादुदवसाय दक्षिणावता यजेतेति ।
अथापि पृष्ठशमनीयं नाम क्रतुमधीमहे ।
अथापि सारस्वतस्येष्टिरेव पृष्ठशमनार्था भवति—तथा दार्षद्वततौरयो-
10 रिष्टिर्वा पशुर्वेति ।
ज्योतिष्टोम इत्यपरम् ।
अनादेशे कमन्यं प्रतीयाम ।
अथाप्याह—"या मितदाक्षिणैव स्यादेष एव कार्यः" इति। PB. 16. 7.
अमितदक्षिणः खलु पृष्ठशमनीयो भवति ।
15 अथाप्येष सत्राणामाद्यन्तेषु दृष्टो भवति ।
अयमु खल्वन्ततम इति ।
अथाप्येष उच्चावचानामाहाराणामन्तेषु दृष्टो भवति ।
यथा चातुर्मास्येषु वाजपेये राजसूये संदंशवज्रयोरिति ।
यद्वेतत् सारस्वते दार्षद्वततौरयोरितीष्टिप्रायः स ह भवति ।

---

1 In C only. 2 ०स्तव C; ०मभेयस्तव G1, G2, J, K. 3 अथ J, K. 4 यथैतच्छा० C, G1, G2, K; यथैतछा० J. 5 ०तथा विगृ० C; ०तथा० G1, G2, J, K. 6 B, K add न. 7 तथापि G1, G2, J, K. 8 ०नार्थो C, G1, G2, J, K. 9 प्रति० B. 10 ०यान G1, G2, J, K. 11 ०ण उ ख० C; ०णत उ ख० G1, G2. 12 संदशपवज्रयो० B; संदःश्ववज्रयो G1, G2. 13 दार्षत इति तद्वत तौरयोरिरी (०ती G2) ष्टि० G1, G2; दार्षद्व० K. 14 संभ० G1, G2. 15 C, J, K omit ह.

सुत्याप्राये तु ज्योतिष्टोम एवाभिरूपतर इति ।
तदपि शश्वद्ब्राह्मणं भवति—तस्मादुदवसाय ज्योतिष्टोमेनाग्निष्टोमेन
रथन्तरपृष्ठेन सहस्रदक्षिणेन पृष्ठशमनीयेन यजेतेति यजेतेति ॥ १ ॥

षष्ठः पटलः

5 अथात एकाहाः ।
तेषां यानि ज्योतिष्टोमानि द्रव्याणि तानि, यान्यन्यान्युक्तान्वयानि तानि,
बृहत्पृष्ठेषु ।
अन्यत् तन्त्रं करोति ।
बृहदेकाहेषु स्थानवच्चिकीर्षन्, अस्य प्रत्नां माध्यन्दिनीयाम्, एषा
10 सꣳरूपिता बृहतेति ।
यस्तेमद्दामार्भवीयाम्, एषा बार्हताद्दह इति ।
अथ यत्र सांर्वचिकीर्षा भवति परिस्वानां तत्रार्भवीयां करोति ।
तदाहुः—परिस्वानैवैतस्य तन्त्रस्य पुरार्भवीया बभूव, ताꣳ सानुर्वाराद्दि-
रपनिनाय, आपडहमात्रो भवतीति ।
15 सैषा तयोर्वाक्सꣳहिता प्रोच्यते ।
अन्तो यान्यन्यानि द्रव्याणि बार्हतलिङ्गानि वा तानि भवन्ति, बार्हतेभ्यो-
ऽह्नोभ्योऽयꣳ सोम इति ।
माध्यन्दिनान्तीया बार्हतलिङ्गाः सूर्यवत्य आर्भवान्तीया दशमादन्त्या-
न्विताः, अन्तो हि बार्हत्पृष्ठ्यमिनि ।
20 एतद् गोस्तम्भमित्याचक्षते—
अथ यत्र ज्योतिष्टोमे तन्त्रे बृहत्पृष्ठं तद्राजयज्ञेषु ।
वृषा शोणा भवति, वृषा हि राजेति ।
व्रात्यस्तोमानां च ज्येष्ठयज्ञे राजजातीयत्वादेव ।
एतस्मिन्नेव तन्त्रे बृहत्पृष्ठे सूर्यवत्यः ।
25 न चेच्छन्दोमैविलोपः, उत्तमाद्वा पृष्ठात् ।
तदार्भवे स्तोमैप्रत्यवरोहः प्राग्ज्योतिष्टोमविचारेभ्यः ।
एतयोस्तन्त्रयोः समासमुभयसामतन्त्रमित्याचक्षते—
प्रतिलोममग्निष्टोमेषु, अनुलोममुक्थ्येषु ।

---

1 सुत्या० G1, G2, K. 2 In B only. 3 C, G1, G2, J, K add नित्यानि. 4 यानि न्यायानि यान्युक्तानि B. 5 सार्विचिकीर्षा Ck; साध्वी चिकीर्षा Cn, G1, G2, J, K 6 परिस्तानौ रेतस्य G1, G2, J 7 ०सन्ववांत्राभिरूढनिधाय B ०सानुर्वांहिरप० G1, G2, J. 8 ततोर्वा० B. 9 ततो B. 10 ०भ्यो वाहो० C, K, ०भ्यौ वाहो० G1, G2, J. 11 दशमादन्तान्विता C, K, दशमदन्तान्विता G1, G2, J. 12 ०ष्ठ० C, G1, G2, J, K. 13 ०नपि वि० G1, G2, J. 14 आर्न० C, G1, G2 J, K. 15 ०अंनतो स्तो० G1, G2, J, K. 16 स्तोम प्र० C. 17 ०विकारे० B

अग्निष्टोमभक्तिर्हि स्वादिष्ठा, उक्थ्यामक्तियस्तेमदा।
अथ यत्रैकर्चो माध्यन्दिनीया भवति
"इन्द्रायेन्द्रो मरुत्वते" इति SV. 1. 472; 2. 426; RV. 9. 64. 22; PB. 13. 9. 1.
5 तत्र करोति, एषा सामान्या तृचप्रथमा मरुत्वतीति।
अथ यत्रान्ये माध्यन्दिनीयाभवीये भवतः, कल्पसमायाणि च द्रव्याणि, तदादीस्तन्त्रमित्याचक्षते।
अथ यत्तदभिवादि द्रव्यं भवति, यत्कामः क्रतुः, तत् कल्पसमायमित्याचक्षते।
10 तदेतत् सार्वक्रतुकम् ॥ २ ॥
"अथैतानि बृहद्रथन्तरयोर्विभक्तानि स्थानान्यपीतरेतरस्य तन्त्रं गच्छतोः प्रतिपदाज्यानि ब्रह्मसामौष्णिहमिति।" Ārṣ. K. V. 18a.
अभीवर्त्त तु राजयज्ञेषु भ्रातृव्यस्याभिवृत्त्यै, भ्रातृव्यवान् हि राजेति।
यत्र वोभयसामा सन् रथन्तरपृष्ठोमा नौधसेन बृहतः प्रत्याहारोऽ-
15 भूदितीव, यत्र वा प्रजापतिप्रवाद एकाक्षरणिधन एकः प्रजापतिः, यत्रं बाहर्गणस्य नाना ब्रह्मसामानि चिकीर्षति, तत् प्रथमेऽहनि करोति, अक्षरनिधनानां प्रथममायतनमिति।
श्रायन्तीयं प्रायश्चित्तार्थेनैव भवति।
"अथ यत्रान्यदग्निष्टोमसाम भवति, तद्यज्ञायज्ञीयमनुष्टुभि भवति", एष
20 नेदिष्ठे चतुष्पद आवाप इति। Ārṣ. K. V. 50 b.
अथ यत्र श्यावाश्वं प्रच्यवते तद्रथन्तरपृष्ठेषु ध्रुव्यं निह्नवानुप्रहार्य, व्रात्यस्तोमेषु च व्रात्यानामुपह्रवाय।
अथ यत्र स्तोमप्रत्यवरोहस्तद् बृहत्पृष्ठेषु पौष्कल२ रोहद्यर्न१ ध्रुव्य१ स्तोमप्रत्यवरोहे न चिकीर्षति।
25 विषमेषु स्तोमेष्वभिसोमा राथन्तरेषु परीतो वार्हतेष्वेते राथन्तरबार्हते इति।

तत्र गोआयुषोऽर्द्धे चतुर्ऋचस्थे कुर्वन्ति भाल्लविनः।
चतुरस्तृचैकर्चान् व्यत्यासेन कालबविनः।
अध्यास्यायामेकर्चौ, अद एकस्यां प्रथमायाम्, अदस्तिसृषु परासु,
अदस्तिसृषु पूर्वासु, अदोऽध्यास्यायामिति शाट्यायनिनः।
5 "तृचप्रथमायां वयमेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थेऽध्यास्याया-
मन्तत एकर्चम्, तां शशकर्णक्लृप्तेत्याचक्षते।" Ārs K. V. 26a.
इतरथोऽनाध्यास्यायां मध्य एकर्चाविभितस्तृचौ, यथैतदग्निष्टुत्पृषभ
इति ॥ ३ ॥

विभक्ताबुक्थप्रणयौ, प्रमंहिष्ठीयवन्ति राथन्तरेषु, साकमश्ववन्ति
10 बार्हतेषु, उद्वंशीयान्तान्युभयेषां पङ्क्त्यनुग्रहाय।
अथ यत्र चतुर्थो भागः भर्त्युपशेने नार्मेधं वा नार्मेधसदृशं वोक्थान्तेषु
चिकीर्षितं भवति।
अथैतौ विश्वजिदभिजितौ पृष्ठ्यपृष्ठ्यस्तोमयोरन्तस्य वेति शाण्डिल्यः।
पृष्ठ्यस्तोमस्याभिजित्, पृष्ठ्यस्य विश्वजित्, पृष्ठ्यदशरात्रयोरित्येके।
15 एतेनैवानुपूर्व्येण बृहद्रथन्तरपृष्ठमभिजितं पृष्ठ्यस्तोमन्यायेन, रथन्तर-
मग्निष्टोमसाम, रथन्तरभक्तिरयं भवति पूर्वत्वात्।
तद् बृहता नोध्यशिशाययिषीज्योतिष्टोमं[12] तन्त्रं पूर्वत्वात्।
तत्र यान्यभिवन्त्यभिरूपाणि तानि जितिप्रवादानि।
"उभयोरभिजितोऽतिरात्री भवतः।
20 ब्रह्मेण आज्यमुद्धरति, आर्षभस्तोभीयं मौं संश्चीचरन्" इति। Ārṣ.
K.V. 52b.

सञ्चारयेदिति धानञ्जय्यः।
किं हि[15] योऽह्नो रात्रिमुपसञ्चारयेदिति।
न सञ्चारयेदिति गौतमः।
25 असञ्चारकुशला यज्ञा भवन्ति।
तत्रैनत् करोति।

'अभि प्र गोपतिं गिरा' SV. 1. 168; 2. 839; RV. 8. 69. 4.
इत्यभिवतः स्थानेऽभिवत्सुज्ञानम् ।
उष्णिहि रथन्तरभक्तित्वान्न श्रुध्यं चिकीर्षति, नो पौष्कलं बृहति पृष्ठे।
तत्रैतत् करोति, उभयभक्तिमिश्रनिधनꣳ सर्वपृष्ठं विश्वजितꣳ रथन्तरं
5 मध्यन्दिने बृहदग्निष्टोमसाम ।
एवमिव ब्राह्मणं भवति—यद्रथन्तरं प्रथमं बृहदुत्तमं मध्य इतराणीति ॥४॥
वैराजꣳ होतृषाम ।
एतद् बृहत् परोक्षम् ।
एतच्चैषामेकनिधनम् ।
10 एकनिधनानि होतृषामाणि भवन्ति ।
महानाम्नी मैत्रावरुणसाम ।
एता अनुक्ता वामदेव्यस्थानेऽभिरूपाः ।
वैरूपं ब्रह्मसाम ।
एतत् सर्वबृहतीषु ।
15 सर्वबृहतीप्रायाणि ब्रह्मसामानि ।
एवं च स्वस्तोमानि भवन्ति ।
रेवतीरच्छावाकसामा [ स्वस्तोमा ] अप्रदाहाय गायत्रीष्वग्निष्टोमसाम ।
एवमिव ब्राह्मणं भवति—"यद्गायत्र्यो भवन्ति तेनाऽऽयतनान्न च्यवन्ते"
इति । PB. 16. 5. 27.
20 तासामेकविꣳशत्यक्षरा प्रथमा ।
तेनैकविꣳश्यां न च्यवन्ते ।
कथं धर्मा इति ।
अकर्तव्या इत्येके ।
अस्वस्थानानि हि भवन्ति, स्थानस्था धर्मा इति ।
25 कर्त्तव्या इत्याचार्याः ।
संयुक्तानि भवन्ति, संयुक्तधर्मा इम इति ।
अथापि कृत्स्नान्वितान्याशीःसाधकतराणि भविष्यन्तीति ।
अथापि शिथिलानि प्रतिलोमानि परोक्षपृष्ठानि, तेषां धर्मकरणेन दृढी-
भावो भविष्यतीति ।

1 ०भ० G1, G2, J. 2 ०न्तरेभ० B. 3 पु० B; पो० J. 4 इहत्० G1, G2. 5 ०रमा० G1, G2, J, K. 6 पृष्ठं B. 7 G1, G2 omit मेकनिधन. 8 अनुक्ता B 9 Wanting in B. 10 अमवादाहाय C; अप्रवादाय K. 11 ०शान्न च्य० C, K, ०शान च्य० J. 12 स्व० C, स्मा० G1, G2, J, K. 13 Omitted by C, G1, G3, J, K.

अथाप्य[1]स्वस्थानानि, तेषां धर्मकरणेन स्वस्थानानी[2]ति चिकीर्षा स्यादिति।
अथापि विश्वजिच्छिल्प इत्याचक्षते।
धर्माणामेतद्यच्छिल्पानीति।
अथापि संशयेऽलोपो लोपान्न्यायतर इति न्यायतर[3] इति ॥ ५ ॥

5 सप्तमः[4] पटलः

अथ[5] कथ[6]मङ्गभूतस्य परिवासा इति।
कर्तव्या इत्येके।
विहिता अप्रतिषिद्धा भवन्तीति।
अथाप्येवं पृष्ठधर्मैः समाधिरिति।
10 अकर्तव्या[7] इत्यपरम्।
सर्ववेदससंयुक्ता भवन्ति[8]।
अपि[9] चैते[10] खल्वङ्गभूता[11]ः सर्ववेदसमिति।
ते खल्वेते धर्मा एतस्मिन्नेव द्वादशाहे स्युरिति गौतमः।
अत्र हि संवत्सरास्ति वदतीति।
15 ऊर्ध्वं द्वादशाहात् सांवत्सरिकाणीति धानञ्जय्यः।
कामं तु छवी द्वादशाहिकी[12] स्यादिति।
बार्हतन्त्रं[13] बृहद्भक्तित्वाद् यत्र कालेयं प्रच्यवते[14]ऽनुजिघृक्षितं तत्र[15] भवति।
तर्हि[16]न्मध्यन्दिनेऽत्रास्य[17] स्वच्छन्द इति।
सत्रा[18]साहीयं ककुभि सोढवन्नाम[19] जितिनामस्विनि भवति।
20 "सफ[20]श्रुध्ये यद्यतिरात्र इति तु भवत्यतिरात्रः सेन्[21] कृत्स्नीभवति, सफी-भवति[22] तस्मात् सफीभवतः सफं वा[23] विच्छ्या[24]चयिष्यत्।" Ārṣ. K. V. 53 a.
तदेक उक्थ्यप्रणये कुर्वन्ति सोढवन्नाम मा प्रच्योष्टेति।
पिपीलिकामध्यां करोति दशरात्रन्यायेन।
25 तां नित्यायाः पुरस्तान्निदधाति।
एवं पथ्यावसानमिति।

---

1 तथाप्य० G1, G2, J. 2 ०स्थानीनि G1, G2, J. 3 J does not repeat न्यायतर इति. 4 In B only. 5 Wanting in C, G1, G2, J, K. 6 कथ मङ्गलभू० G1; कथमङ्गलभू० G2, J, K. 7 ०क्तास्ते C, G1, G2, J, K. 8 ०न्तीति K. 9 B has अपेत् नु for अपि चैते. 10 चैव ते G1, G2 11 ०भूतान् B. 12 ०शहिकी C; ०हिका J. 13 ०तं तन्त्र C, J, K. 14 प्रन्यवान० G1, G2, J, प्रच्यवान० K. 15 Wanting in K 16 तन्म० G1, G2, J, K. 17 ०न मैत्रास G1, G2, ०ने मैत्रास्य J, K. 18 सर्वासा० G1, G2, J. 19 सोढभवन्नान आनि० G1, G2, J. 20 सफमध्ये G1, G2, J, K. 21 स G1, G2 22 Wanting in C. ०फि० B. 23 ना G1, G2, J, K 24 विच्यावचिनोत् C, G1 G2, J, K

तद्यत्र गेणीचिकीर्षा प्रजापतिकामो वा, एवमेवैष तस्मिन् स्थाने भवति ।
तत्र वामदेव्यं पृष्ठेभ्यः प्रच्युतमनुगृह्णाति, वामदेव्यभक्तिर्न्यहन्युत्पन्नमिति।
वारवन्तीय९ सर्वपृष्ठेषु चिकीर्षितं रैवतीसंयोगात् ।
तद्वद् द्विपदासु द्विपदाभक्तिर्न्यहन्युत्पन्नमिति ।
5 अनुतन्त्रमुक्थप्रणयौ नाना षोडशिसामनी करोति ।
नानात्वंर्थो नानदमभिजितीति, एतस्य पूर्वम्यर्थेनेति ॥ ६ ॥
अथ व्रतस्य स्तोत्रप्रदेशः—
पञ्चविंशतिस्तोभाः पञ्चकृत्वः [पदं पञ्चकृत्वः] पूर्वा देवता पञ्चकृत्व उत्तरा ।
10 अथाप्याहुः—व्यवस्तोभेत् पददैवतम्, एवं९ समाधिः पददैवतस्येति ।
एते वापि दैवते व्यवस्तोभेदित्येके ।
एव९ समाधिर्दैवतयोरिति ।
एते वार्प्यर्द्धदेवते व्यवस्तोभेदिति शाण्डिल्यः ।
अथ कालबविनो यथासमाम्नायमेव कुर्वन्ति ।
15 एतत्त्वेषां लघिष्ठम् ।
अपि [च] यान्यनुपदंस्तुब्धानि आदंर्शयतीति तेषामुभयतः स्तोभात् सकृन्निगदा एवास्य पुरस्तात् स्तोभा भवन्ति ।
यस्त्वेनान् प्रथममवोचाम तत् कर्म ते खलु शब्ददेके आत्मना प्रतिपद्यन्ते, आत्मसत्समान्यङ्गानीति ।
20 शिरसा वयम्, शिरो वा अग्रे सम्भवतः सम्भवतीति भवति ।
अथैके शिरसा स्तुत्वा, अथ दक्षिणेन पक्षेण, अथात्मना, अथोत्तरेण पुच्छेन, एवं मध्य आत्मा भवतीति ।

अथैके शिरसा स्तुत्वा, अथात्मना, अथ पक्षाभ्याम्, अथ पुच्छेन, एवं सम्यगवयवस्यानुक्रमश्च भवतीति।
अथैके शिरसा स्तुत्वा, अथ पक्षाभ्याम्, अथात्मना, अथ पुच्छेन, एवमिवाङ्गानामानुपूर्व्यमिति।
5 अथ यथैतद् विहृत्य स्तवने तद्वयम्।
एतद् ब्राह्मणवदित्यृश्यस्य साम्नि।
किं प्रत्यक्षं किं परोक्षमिति।
"ह्रस्वं प्रत्यक्षं द्राघितं परोक्षम्। अपि वेन्द्रेति प्रत्यक्षम्, इन्द्र इति परोक्षम्।" Dh. Dr. Ś. 10. 1. 20; cp. Sāy. PB. 5.4.15.
10 अपि वा यथाग्रामं एतदङ्गमाचष्टे तत् प्रत्यक्षम्, तस्यैषा स्तुतिः स्यात्।
तंसरमिव ते पायुक्रंजुरनोस्कन्ध इति।
यथा समाम्नायमेवोपेयुः।
एवमिव ब्राह्मणं भवति—"यद्वै मनुष्याणां प्रत्यक्षं तद्देवानां परोक्षम्।" PB. 22. 10. 3.
15 अथ यन्मनुष्याणां परोक्षं तद्देवानां प्रत्यक्षमिति।
तत् कुशलं यदस्मिन्नहनि, देवप्रत्यक्षं कुर्युः।
तत्र खलु गोस्तन्त्रं करोति।
एतदन्तं तन्त्रतरमन्तेचरमिदं भवति।
तत्र यो द्रव्यविकारो निर्वाकार्थे न सम्भवति।
20 अथापि प्राजापत्यं व्रतम्, अनिरुक्तः प्रजापतिरिति।
अथाप्यत्रोचस्त्स्तावानि, अंभोक्तं व्रतमिति।
स्तोमकल्पाय चतुर्क्षचमाहरति।
तैंधदेतद् 'यवंयवं नो अन्धसा' इति, SV. 2. 325; RV 9. 55. 1.
एतद्यवप्रवादं पुष्टिप्रवादम्।

अन्नाद्यसंस्तावमश्नोकेऽभिरूपम् ।
अरायोधीयमुभयसामसु चिकीर्षितम्, उभयविधेनिधनं हि भवति ।
तच्चैत्ग्रेययोन्यन्नाद्येसंस्तावमश्नोकेऽभिरूपम् ।
"ऐकाहिकाद् व्रतात् पञ्चनिधनं वामदेव्यमपनेयति," नानाह्नामतिमेद-
5　　नायेति भवति । Ārs. K. V. 53 b.
तदेकाहे नोपपद्यते ।
यज्ञसामान्यादहीनेभ्यः, तत्र श्यैतमनुतन्त्रम् ।
'आ नो विश्वासु हव्यम्' इति । SV. 1. 269; 2. 842; RV. 8. 90. 1.
एता ब्रह्मप्रवादा इति ।
10 "इलान्दमग्निष्टोमसाम कुर्वन्तस्तृचे कुर्युः ।" cp. LŚ. 10. 9. 6.
एष आवृत्तिन्याय इति ।
"दशसु दशस्वक्षरेष्वार्चिकान्यनुगानानि ।" cp. LŚ. 10. 9 7.
एवं वैपजान्यनुगानानि भविष्यन्तीति ।
"षड्टृचे सर्वस्मिन्नित्याचार्याः ।
15 अर्द्धर्चेष्वनुगानानि, एवमसंरोधतरो गीतानाम् ।" इति । LŚ. 10. 9. 8.
"द्वादशर्चे इति शाण्डिल्यः ।
तत्रापरावाग्नेयौ तृचावाहरेत् ।
'आ ते अग्ने' SV. 1. 419; 2. 372; RV. 5. 6. 4; PB. 13. 6. 1.
'अग्निं तं मन्ये' । SV. 1. 425; 2. 1087; RV. 5. 6. 1.
20 एवमृगृहष्टीन्यनुगानान्यृक्षु भविष्यन्तीति ।" cp. LŚ. 10. 9. 9.
षड्टृचे तु कुर्वन्ति ये कुर्वन्ति
'अग्ने तव श्रवो वयः' इति । SV. 2. 1166; RV. 10. 140. 1. LŚ. 10. 9. 6.

चतुर्थमेवानुगानं तृचे स्यादिति वार्षगण्यः । LŚ. 10. 9. 10.
25 अत्र हि निधनवादं वदति—व्रतमिति भवति, स्वरिति भवति, शकुन इति भवतीति । LŚ. 10. 9. 10.

1 ०धेरेव C, ०धेहं च G1, G2, J K. 2 तदाग्ने० C, G1, G2, J, K. 3 ०रं० G1, G2. 4 एकाद् B. 5 ०पव्ययति G1, G2, J. 6 नानामहा० C, G1, G2, J, K. 7 तस्यैतमनुतन्त्रम् G1, G2, J. 8 ०एतावद् C. 9 अवर्ति० B. 10 भवन्तीति G1, G2, J, K. 11 अध्यर्चे० B. 12 ०शार्चे C. 13 ०वाहा० B. 14 Wanting in C, G1, G2, J, K. 15 ०गाना G1, G2, J. 16 Omitted by G1, G2, J.

"भक्तयश्च कल्पन्ते, नानासामवन्त्यैनान्येकेऽधीयत इति" ॥ ७ ॥ LŚ. 10. 9. 10.

अथ साहस्राः ।
त्रिरात्राणि च व्रतानि चोपकृताः ।
5 एवमिव ब्राह्मणं भवति—तत्र त्रयाणां सम्पद् ब्राह्मणचोदिता ।
तदुपकृता एते स्तोमा भवन्ति ब्राह्मणविहिताः ।
तृतीयस्योमे सामनी करोति—व्रतन्यायेन, त्रिरात्रन्यायेन च ।
व्याख्यातमौभयं तन्त्रयम् ।
पूर्वयोः पङ्क्तिषु ब्रह्मसाम यत् संहस्राक्षरासु ब्रह्मसामेति ।
10 एवमक्षरसहस्रं सम्पद्यते ।
बार्हतं तन्त्रं तृतीयस्योक्थ्यत्वात् ।
"अग्निं दूतं वृणीमहे" इति । SV. 1. 3; 2. 140; RV. 1. 12. 1; PB. 11. 7. 3.

उभयान्याज्यानि ।
15 तत्र "पूर्वे बार्हत उत्तरे राथन्तरे इति शौचिवृक्षिः ।" Ārṣ. K. V. 54 b.
एवं समविभागो देवतानामिति ।
"एकदेवत्ये बार्हते, द्विदेवत्ये राथन्तरे इति धानञ्जय्यः ।" Ārṣ. K. V. 54 b.

एतद् द्वयोः समवयतोः कुशलं यद्व्यत्यास इति ।
20 व्याख्यातं श्रायन्तीयम् ।
अपि चैकादशाक्षरशतानि सम्पद्यते ।
तत्र नित्या सहस्रसम्पत्, मौक्षमुक्थ्येषु चिकीर्षितम्, उक्थ्यदर्शनं च ।
अपि च त्र्यक्षरणिधनं त्रीण्युक्थ्यानीति ।
सौभरं त्रैककुभं वेति विचारयन्ति ।
25 नित्यं हि सौभरं श्रायन्तीयनियोगात्, उद्वंशीयनियोगाद्वा त्रैककुभमिति ।
त्रिरात्रविधं उत्तमः, त्रिरं त्रिक्यः प्रतिपद्श्चाज्यानि च ।
पंष्वत्रैरात्रिकम्—

---

1 कल्पन्ते LŚ.　2 न उप C, G1, G2, J.　3 सा K.　4 ॰साम्येति G1, G2, J, K.　5 ॰नीति K.　6 देवाना॰ G1, G2, J, K.　7 यदभ्यास C.　8 ॰तोः आ॰ G1, G2, J, ॰ताः श्रा॰ K.　9 ॰समह: सौ॰ C; ॰समह सौ॰ G1, G2, J, K.　10 ॰यणो॰ B, K.　11 ॰विधतम उ॰ C, G1, G2, J, K.　12 त्रैरात्रेभ्यः B.　13 ॰कर्मत्रिरात्रिकम् C, K; ॰कमत्रिराकन् G1, G2, J.

'इन्द्रमिद्गाथिनो बृहद्' इति । SV. 1. 198; 2. 146; RV. 1. 7. 1; PB. 11. 7. 3.

तद्यत् करोति पृष्ठमध्य[1]विभाजयिषीत् ।
[2]ज्यौतिष्टोमं तन्त्रम्, विभ्रंशाशङ्कस्त्रिरात्रे ।
5 एतत् प्रतिष्ठाविधर्त[3]रं तन्त्रयोरिति ।
ककुभं माध्यन्दिनमुपाहरति ।
[4]ईमामुपरिष्टाद् गायत्र्या निदधाति ।
एवमियममुत्र[5] गायत्र्यानन्तर्हितेर्ति[6] ।
तस्यां[7] स्थाने द्विपदां करोति पुरु[8]षच्छन्दसः पुरुषच्छन्दस इति ।
10 सतोबृहतीं करोति ।
त्रिरात्रन्यायेन तां नि[9]त्यायाः पुरस्तान्निदधाति ।
एवं पथ्यावसानमिति ।
तद्यत्र [10]गंणीचिकीर्षा [वा[11]] प्रजापतिकामो वा, एवमेवैतानि छन्दांसि युज्यन्ते ।
15 आष्टमिकीस्त्रिष्टुभः करोति ।
एता रूपसम्पन्ना इति ।
तत्र वामदेव्यं करोति ।
एवं हि ब्राह्मणं भवति—"पवमानस्यान्त्यं वामदेव्यम्" इति । PB. 16. 11. 3.
20 स्वारं सौपर्णं मैत्रावरुणसाम, एतद् वामदेव्यसदृशं[12] ।
अपु[13]रस्तात्स्तोभं[14] बहिःस्वारं यथा वामदेव्यम् ॥ ८ ॥

अथ साद्यस्क्रेषु याः सद्यःप्रवादा नवप्रवादाः प्रोक्तवत्यो जनद्वत्यस्ता अभिरूपाः ।
अथ खल्वत्र पृष्ठ[15]न्यज्ञाश्चिकीर्षिता भवन्ति ।
25 [16]आमहीयवान्ततो य[17]द्वंतुप्रत्ययानि पृष्ठानि परिवा[18]चनार्थानि[19] तानि ।
यत्र साक्षादस्वस्तोमान्यभविष्यंस्तत्रै[20]तच्छाक्वरवर्णं शक्करीभ्यः प्रतिवेष्ट[21]म्भं वैरूपात् साक्षाद्रथन्तरं क्रियते ।

---

1 ॰मत्य॰ C, G1, K; ॰मन्य॰ G2, J　2 ज्यो॰ B　3 ॰धरं G1, G2, J; ॰विधनिधर K.　4 तामुप॰ C, G1, G2, J, K.　5 ॰मुन G1, G2, J, K.　6 ॰तेनेति C, ॰हिते G1　7 तस्य B.　8 Wanting in C.　9 निधने C; C adds वैरूपात्साक्षाद्रथन्तरं क्रियते ( line 27 ) सौभरं बृहतो वारवन्तीय रेवतीभ्यः ( p. 107. 1 ).　10 गुणी॰ B, G1, G2, J.　11 Wanting in B.　12 ॰शः B.　13 पु॰ B.　14 ॰भमेव C　15 पृष्ठय॰ C.　16 आमाभिमानितो C, G1, G2, J, K.　17 यद्वतु॰ C, J, K. यत्तु॰ G1, G2.　18 ॰या॰ C, G1, G2, J.　19 ॰र्थानीति C; ॰र्थानानि G1, G2, J, K.　20 ॰त्रस्तैत॰ C.　21 ॰म्भवै॰ C.

सौभरं बृहतो वारवन्तीयं[1] रेवतीभ्यः स्वाशिरामर्को वैराजादायोस्व-
मुष्णिहि ।
मध्यन्दिने स[2] दक्षिणां प्रतिगृह्य विभ्रंशे[3] स तृतीयसवने प्रायश्चित्तं[4]
चक्र इति ।
5 कथमुत्तरयोः साद्यस्कधर्मा इति ।
कर्तव्या इत्येके ।
साद्यस्कैश्चाभिपरीतौ[5] भवतः ।
अपि चैते[6] कालसङ्कर्षाद् भवन्ति ।
सङ्कृष्टकालाविमौ भवत इति[7] ।
10 [8]अकर्तव्या इत्यपरम् ।
[9]असाद्यस्कौ हि भवतः ।
यद्येतदभिपर्ययां[10]दिति, सर्व एवासाद्यस्कैरभिपरीता भवन्ति ।
यद्येतत् काले[11]सङ्कर्षादिति[12], उच्चावचाः[13] कालविप्रकर्षा एकाहा[14]नाम्
तदेवं बहु प्रसज्येतेति ।
15 विश्वजिच्छिल्पे सोम[15]स्तोमे सति साध्यासां बृहतीं करोति ।
कस्य हेतोरिति ।
पुरस्तादापन्नानि वैश्वजितान्य[16]विच्याचयिपन्नविच्याचयिषन् ॥ ९ ॥

[17]अष्टमः पटलः

जिघांसंश्च[18]य उत्तरः ।
20 तत्र[19] या हतवत्सः क्रूराणि च[20] सामान्यभिरूपाणि तानि ।
त्रिकाण्याज्यपृष्ठानि करोति ।
एवं सुपराञ्चि भवन्ति । cp. LŚ. 8. 5. 12.
वज्रोक्तं च पञ्चदशमभिसम्पद्यन्ते[21] ।
चतुरः पञ्चदशान् ।
25 'अर्वा सोम द्युमत्तमः' इति SV. 1. 503; 2. 344; RV. 9. 65 19;
PB. 13. 3. 1.

---

1 ॰दास्वसाद्यु॰ G1, G2. 2 G1, G2, J omit स. 3 ॰शेत्र C, G1, G2, J 4 ॰चित्ति C, G1, G2, J, K 5 ॰तो G1, G2, J, K 6 चेमे C, G1, G2, J, K. 7 Wanting in G1, G2, J. 8 कर्त॰ B, wanting in G1, G2, J 9 G1, G2 omit असाद्यस्कौ ˙ सर्वे एवा (line 12) साद्यः कौ J, K. 10 ॰र्यया॰ C. 11 काले स॰ B 12 ॰र्षा इति B 13 ॰वचा B, G1, G2, J. 14 एकानां G1, G2, J, K. 15 सने स्तो॰ B. 16 ॰न्यविच्याचयिषन्न॰ C, G1, G2, J 17 In B only. 18 ॰सय्च C, ॰सचा G1, ॰सञ्च G2, J. 19 ता B. 20 Wanting in K 21 ॰पन्ते B.

माध्यन्दिनीयं[1] भवति।

आह्वेयं[2] भवतीति[3] शाण्डिल्यायनः।

ऋपर्व्युपित्यर्थात्तु[4] स्नातकाः कुर्वन्ति।

भागविलोपे चोत्पन्ना भवतीति[5]।

5 "पराचीषु रथन्तरम्" इति। ṢB. 3. 8.

द्विपदोत्तरासु स्यात्।

"एव[6] सुपराग् भवति।" cp. LŚ. 8. 5. 12.

"ककुभावेवेति गौतमः।" LŚ. 8. 5. 13.

अनभिर्वर्त्तस्यैतद् ब्राह्मणमिति।

10 "पवमाने रथन्तरम्" इति उद्धृत्य बार्हतानि स्यात्। LŚ. 8. 5. 9; PB. 16. 11. 3.

अप्रेडं[7]श्च पदस्तोभः शाकरवर्णस्य त्रिणिधनानुग्रहाय शक्करीणां च।

पवमानान्त्यं वा रथन्तरम्, तज्जामि।

एवमिव ब्राह्मणं भवति—"यद्वै महावृक्षौ सम्मृच्छेते वद्दु तत्र विभग्नं

15 प्रभग्न[8] शेते।" इति। PB. 7. 6. 16.

यत्तु वाजामि यौधाजयस्थाने दैर्घश्रवसं यदन्तरा सोमायन्तीति।

उपरिष्टादनुद्धरन् वा बार्हतान्यनुकल्पयेत्।

"तत्र पौरुमद्गं तृचसमासये भ्रातृव्यवध[9] ह्यस्मिन् ब्राह्मणं दर्शयति।" इति। cp. LŚ. 8. 5. 11.

20 यौधाजयं[10] [11]वोत्सेधमध्यं कृत्वा पवमानान्त्य[12] रथन्तरम्।

आन्धीगवंनिषेधो वृत्तिग्रहणात्।

वामदेव्य[13] सर्वाभिवादनार्थमिति धानञ्जय्यः।

प्लवश्चेद् ब्रह्मसाम स्यात्।

"त्वमिन्द्र प्रतूर्तिषु" इति। SV. 1. 311; 2. 987; RV. 8. 99. 5.

25 एतास्वेता रूपसम्पन्ना इति।

श्यैतीयोसु[14] वा बृहत्पृष्ठत्वात्।

---

1 °नीया। C; °नाय (°या J) इति। G1, G2, J; °नीयाहनि। K. 2 मर्येयं B. इन्ये C. 3 भवन्तीति C, G1, G2, J. 4 ऋषभ्पृषेत्यर्थात्तु G1, G2, J, K. 5 °न्तीति K. 6 °मिनिव° J, K. 7 °डेऽश C; °डेऽश G1, G2, J. 8 °माथये G1, G2, J, K. 9 भ्रातृव्यवर° ह्य° C; भ्रातृवधं ह्या° G1, G2; भ्रातृवध° स्या° J. 10 °जया G1, G2, J, K. 11 वैतां वोत्सेधमध्यमां B; पैतवोत्सेधमध्यां G1, G2, J, K. 12 °नास्य नि° C, G2, J, K; °नास्य निषेधो G1. 13 सर्वि वाभि वदनार्थ इति C, G1, G2, J, K. 14 श्यैतयोनो C, K; श्यैतयोयोगो G1, G2; श्यैतयो J

अथैष एकत्रिकः प्रजापतीप्सामुपकृतः ।
तत्रैतावुत्सेधनिषेधौ ।
प्राजापत्यादह्नो निषेधः ।
ब्रह्मसाम श्रायन्तीयस्यर्चि, एषा श्रितवती प्रायश्चित्तकृत्येभिरूपेति ।
5 अतो यो द्रव्यविकारः प्रजापतीप्सया स भवतीति ॥ १० ॥

अथ व्रात्यस्तोमाः ।
तत्र षोडशाशीःस्तोमः ।
स एष द्वात्रिंशो विकृतः ।
तमच्छावाकसाम्नो निदधाति ।
10 एतदानुष्टुभं[6] स्थानमिति ।
अनन्तरा द्वात्रिंशप्रयुक्तिर्भविष्यतीति ।
पवमानयोर्ज्योतिष्टोमानीतराणीति[8] ।
तत्र या वीर्यप्रवादा बलप्रवादा द्रविणप्रवादाः शुचिप्रवादा निषण्णवत्यः पवित्राभिव्याहारा अभिरूपास्ताः ।
15 यानि च गणसामानि निर्भुंजयन्ति तत्र यच्छन्दोयोगविकारो गणीचिकीर्षया स भवति ।
अपि च क्षुद्रीचिकीर्षया ।
अथ खल्वाह—"यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवर्ध्नुयादपेतरे आर्ध्नीत ।" इति । PB 17 1 8. cp LS. 8. 6. 5
20 कस्येदं ब्राह्मणं स्यादिति ।
नौधसप्रतिषेध इत्याचार्याः ।
तद्धि निरुक्तनिधनं भवति, नेदमिति ।
अथापरम् आ इन्द्रा इत्येवास्य निधनं निराहुः ।
तद्यत्तथा स्यात् तन्निरुक्तं स्यादिति ।
25 यथा समाम्नायं चैवं ।
एवमनिरुक्तमिति ।

---

1 प्रजा० J. 2 षा is wanting in G1, G2, J, K. 3 ०कृतोऽभि० C 4 भवति C, G1, G2, J, K. 5 विकृतः B, G1, G2, J, K. 6 ०भस्था० C, G1, G2, J, K. 7 पवसा० C. 8 ०णी G1, G2, J, ०राणि K. 9 C, G1, G2, J, K add गणप्रवादाः. 10 पवि० C, G1, G2, J, K 11 हृत० C, G1, G2, J, K 12 ०रान् C, G1, G2, J, K. 13 प्रोवेति C. प्रोतीति G1, G2, J, K. 14 नोधस इति निषेध G1; नोधस इति निषेध G1, G2, J, नोधस इति षेध K. 15 ०नीति C, G1, G2, J, K. 16 तंनिरुक्तं स्यादिति G1, G3 । 17 त्वेव C, G1, G2, J, K

द्वावाग्निष्टोमंस्तोत्रीयौ समामनामः ।
द्वये व्रात्या भवन्ति—शीर्षाद्यंश्चैषीकपाविनश्च ।
शीर्षादीनां सतोबृहतीष्वग्निष्टोमसाम कुर्यादिति धानञ्जय्यः ।
ज्यायसस्तान् ब्रुवते—ऐषीकपाविनां प्रगाथबृहतीषु केनो[6] विद्यादिति ।
5 स्वयं प्रैब्रुवारंभितीति ।
ज्याया॑ंसः खलु शीर्षाद्यो ब्रुवते ।
एवं षोडश्युत्तरस्तं खलूक्थ्यं करोति ।
षोडशयोः स्थाने चिकीर्ष॑ंस्तावाद्यवसानयोर्निदधाति ।
एव॑ं समाधिः पवमानाच्छावाकसाम्नामिति ।
10 कनिष्ठयज्ञ उत्तरः ।
ये तुं खलु जन्मना कनिष्ठा ये[11] द्वो[12] वयसेति ।
ये जन्मनेत्याहुस्तान् कनिष्ठा इत्याचक्षते ।
अथाप्याहुः—ये वयसा सखिचारिणो हि व्रात्या भवन्तीति ।
व्याख्यातौ षोडशावच्छावाकसाम्नोः, उद्धरति शुध्य॑ं स्तोमस॑ंरोधात् ।
15 तत्र मरुता॑ं सं॑ंस्तोभं करोति[16] ।
मांशीःस्थानं मा प्रच्योष्टेति विहरति श्यावाश्वान्धीगवे ऋचौ वीप्सन् ॥११॥

ज्येष्ठयज्ञ उत्तरः ।
ये तु खलु जन्मना ज्येष्ठा ये द्वो वयसेति तत् पूर्वेणैव व्याख्यातम् ।
तत्र दाशरात्रिका॑ंश्च स्तोमान् उभे चे सामनी करोति ज्येष्ठयज्ञं कृत्स्नी-
20 चिकीर्षन् ।
अथापि द्वात्रि॑ंशमांशीःस्तोम॑ं साक्षाज्ज्येष्ठयज्ञेऽचिकीर्षीत् ।
स आदीयमानः सर्वान् स्तोमानादापयेत् ।
तांस्तु यदेवं प्रयुङ्क्ते, एवमनन्तरेण रोहो भवति ।
अष्टाचत्वारि॑ंशात् परस्तादन्तरितावितिति त्रिणवत्रयस्त्रि॑ंशौ ।

---

1 ०ष्टोमसम० G1, G2, J, ०ष्टोममाम० K. 2 ०याश्चै० G1, G2, J. 3 ०पा० C. 4 ०दीषा॑ंस यं मशीरन् ज्याया॑ंसः कु० G1, G2. 5 ए० B, एषोकया वीनां C, J, K, ये ··· G1, G2. 6 ०नोद् B, केनो ि is wanting in G1, G2. 7 ब्रु० G1, G2, J. 8 ०न्न् C, G1, G2, J, K. 9 षोडश श्युत्तरस्तत्र C, षट् षोड (०डय K) श्युत्तरस्तत्र G1, G2, J, K. 10 तु B. 11 यो G1, G2, J, K. 12 स G1, G2, J, K. 13 ०स्ते हि C, ०तान् हि G1, G2, J, K. 14 यथाहुः C, J; अप्याहुः G1, G2. 15 ०स्व॑ंस्तोम C. 16 करोतीति G1, G2, J, K. 17 ०शीःस्तोम C; ०शीःसाम G1, G2, J, K. 18 प्रो० B, K. 19 ०भाजी० B. 20 तुचा B. 21 व C, G1, G2, J 22 तथा० B. 23 G1, G2 omit समाशीःस्तो ··· तां॑ ( line 23 ). 24 ०दापेद् C; ०दापे G2, J, K. 25 ०युक्त G1, G2, J, K. 26 ०नवकारेणारो० C, K; ०नवकरणे G1, G2, J. 27 भाष्टा० G1, G2, J, K.

अभिरूपोऽन्ते द्वात्रिंशो[1] वा चिकीर्षेन् ।
"कनीयांसौ स्तोमावुपागुः" इति नु भवति । PB. 17. 4. 3.
त्रयस्त्रिंशाद्द्वात्रिंशावितीवैतद् भवति ।
द्वे त्रिणवत्रयस्त्रिंशे द्वे द्वात्रिंशत्रयस्त्रिंशा इति वा खलु तत् कुर्युः,
5 सर्वान्वै वरुथानुपेयुरिति ।
अकुशलाऽनुग्राहतान् कौषीतकीन् मन्य इति धानञ्जय्यः ।
येवं ह्येवैषु सत्सु रोहो भवति ।
तत्र यो रोहोऽर्थकारितः स भवति ।
कथमनिष्टप्रथमयज्ञानां व्रात्यस्तोमा इति ।
10 अकर्तव्या इत्येके ।
अनारभ्य वदति—"य एतेनानिष्ट्वा" इति । PB. 16. 1. 2.
अथाप्येषां ज्योतिष्टोमे[10] प्रतिपद् विधीयते ।
अथापि यथा नानाहिताग्नीनामेवमनिष्टप्रथमयज्ञानामिति ।
कर्तव्या इत्यपरम् ।
15 प्रायश्चित्तार्था इमे भवन्ति ।
प्रायश्चित्तमु खलु पूर्वं विधीयते ।
अथापि ज्योतिष्टोम एव प्रायश्चित्तस्य पूर्वत्वं दर्शयति यथा कलशे दीर्णे विरिक्ते[13] सोमग्रहेऽपि विशीर्णे[14] इति ।
यद्वेतत् "य एतेनानिष्ट्वा" इति, प्रकृतिभूतानामेतद् भवति । PB.
20 16. 1. 2.
यद्वेतत् प्रतिपद् विधीयत इति, इष्ट्वा व्रात्यस्तोमेनेत्येतदुपपद्यते ।
यद्वेतत् तद्यथा नानाहिताग्नीनामिति, सिद्धिकारितमेतद् भवति ॥ १२ ॥
अथाग्निष्टुत्सु या आग्नेय्यः पावकाभिव्याहारा ज्योतिष्टोमीभिः सदृशव्यञ्जना यथास्थानमभिरूपास्ताः ।
25 रुद्रवतीस्त्रिष्टुभः करोति ।
रुद्रो मरुतां पितेत्याहुः ।

---

1 ०रूपान्तो C. 2 द्वावि - शो C. 3 ०कीर्षेत K. 4 ०शाद्वात्रि० G1, G2, K, ०शाद्वात्रिं० J. 5 Wanting in J, K. 6 वारुदानुपे० C, G1, G2, वरुदापे J, वरुदानु० K. 7 स्वर G1, G2, J, K. 8 रोहार्थ० B. 9 व्रात्यस्तोमा G1. 10 ०ष्टोमो मे B. 11 ०मप्यनि० C, G1, G2, J, K. 12 ०व्यता G1, G2, J, K. 13 ०ऽतिरि० B, K. 14 ०मावापि C; ०माप्यूपि G1; ०माव्रपि G2; ०माप्पूपि J, K. 15 शीर्णे C, दीर्णे K. 16 यद्येतद् B; यद्वेतय G1, G2, J; तद्वेतद् K. 17 तद्वे० K. 18 पद ' मिति is wanting in G1, G2, J, K. 19 पठिताभि० C; पवितामि० G1, G2, J, K

तेन मरुत्वदनुग्रह इति ।
गायत्रीष्वग्निष्टोमसाम ।
एतदाग्नेयच्छन्द इति ।
स यदेताः
5 'उप त्वा जामयो गिरः' इति, SV. 1. 13; 2. 120; RV. 8. 103. 13; PB. 16. 5. 1.
एता वायव्या इति ।
तत्रै वारवन्तीयं गायत्रीसाम, ऐडमृचा स्तोत्रीयम् ।
तेन प्रच्युतं यज्ञायज्ञीयमन्यं करोति ।
10 यत्र हि स तृचतां लभते ।
तदेतत् स्तोमसंरोध एवमेव भवति ।
ऐन्द्रीषु परेषां करोति ।
ऐन्द्री सुत्येति ।
सोऽयं पूर्वः सर्वाग्नेयः ।
15 एकैस्तोत्रं चिदैन्द्रं भविष्यतीति ।
स यदग्निष्टोमसाम, अन्तावयानि कर्माणीति ।
सप्तदशे विषमे स्तोमे सत्यनभ्यासां बृहतीं करोति ।
कस्यै हेतोरिति ।
न ह्याग्नेयी साभ्यासा विद्यते ।
20 तस्यां चत्वारि सामानि ।
तृचावभित एकर्चौ, मध्य एवं तृचप्रायणम्, तृचोदयनं भविष्यतीति ।
त इमे पञ्चानुवाकाश्चत्वारः कल्पाः ।
स एष प्रथमः सर्वेषामेव सार्थः स्यात् ।
अपि वा प्रथमस्य द्वौ स्याताम् ।
25 कथं भक्त्या इति ।
आग्नेया इत्येके ।
एवं यथार्थं भवति ।
अथाप्यत्र सुविप्रतिपिद्धरूपाण्यर्थैराग्नेयानि भवन्ति ।

---

1 B adds मे. 2 एवं तदाग्नेयं छ० G1, G2, J, K. 3 ०रेवा G1, G2, J, K. 4 Omitted by G1, G2, J. 5 ०सामैव संतृचस्तोत्रीया B. 6 ०मन्त्यं C, K, ०मस्यं G1, G2. 7 ऐन्द्री G1, G2, J. 8 *Omitted by C.* 9 *Wanting in C.* 10 सु० G1, G2, J. 11 पूर्वः C. 12 स आग्नेयः C; सर्वं आग्नेयं G1, G2, J. 13 एक is wanting in C. 14 कस्या G1, G2, J. 15 रि सामानि ... पञ्चानु is wanting in G1. 16 सामनि B. 17 ०र्चौ C. 18 ०र्थं B. 19 ०पाना० G1, G2, J, K.

[ आ[1]ग्नेयानि यथा हविःस्तुतिः पवमाना इति ।
यथाप्रकृतीत्यपरम् ।
भक्ष्यविशेषान् विदधन्नाग्निष्टुत्सु विदधाति ।
अथा[2]पि कृतावेवायथार्थं भवन्ति । ]
5 यथा मैत्रावरुणा[3]य्येऽग्निष्टोमसाम्नीति ।
उत्तरेष्वग्नय इति स्थाने सुब्रह्मण्यायां देवा इति ब्रूयात् । cp. PB. 17. 5. 7.
ऐन्द्रत्वादग्निष्टोमसाम्न इत्येके ॥ १३ ॥ Ārṣ. K. V. 60 a.

---

1 आग्नेयानि ··· भवन्ति ( line 4 ) is wanting in B. 2 अपि B. 3 ०वरुण्य-साग्निष्टो० C, K; ०वरुण्यसाम्नेष्टो० G1, G2, J.

# अथ सप्तमः प्रपाठकः

अथ त्रिवृतः ।
तेषां [ प्रथमस्य ] यो द्रव्यविकारो निर्वाकार्थेन सं ह भवति ।
पुरोधाकामयज्ञ उत्तरः ।
स्थपतिसवो वायम्, समानाः श्रैष्ठ्ये संवृणीरन् । cp. PB. 17. 11. 6.
5 ब्रह्मसवो वा, ब्राह्मणस्य यज्ञेन जिज्ञनिंपमाणस्य त्रिवृतः स्तोमः सम्पद्यते ।
लघुरीप्सायामभिरूपोऽग्नस्तोमश्च, अग्रमेव गच्छति यः पुरोधां यः
स्थापत्यम्, यस्य तु स्याद् ब्रह्मसव इति । cp. PB. 17. 11. 5.
एषा ब्रह्मणो भक्तिरिति ।
अनुसवनं दक्षिणा ददाति ।
10 कस्य हेतोरिति ।
बृहस्पतिरभिषिच्यमानो देवगणेभ्यो दक्षिणा आजहार ।
वसुभ्यः प्रातःसवने रुद्रेभ्यो माध्यन्दिने सवने आदित्येभ्यस्तृतीयसवनेऽश्वद्वादशा माध्यन्दिने ददाति । cp. LŚ. 8. 7. 6; PB. 17. 11. 2; Āp. Ś. 22. 7. 1–4. 7. 12; Kāty. 22. 17. 9; BŚ.
15 27. 1. 2.
दक्षिणा वेलायामन्याधित्सन् मन्यते ।
इयेनेनेपोद्द्रव्यसमुद्देश उक्तः । cp. LŚ. 8. 7. 12, Kāty. 22. 5. 30.
उद्धरति ह्याकरस्वर्णम् ।

---

1 In C only. 2 अथा G1, G2, J. 3 Wanting in B. 4 सम्भ॰ G1, G2. 5 ॰मनो G1; सतो G2, J, K. 6 वदम् C. 7 मेषो Ca; मेप्सं Cb, G1, G2, J; मेश्वं K. 8 Wanting in G1, G2. 9 ॰प्य॰ K. 10 ॰ज्ञः B. 11 ॰पो यः स्तो॰ C. 12 वसु॰ C, G1, G2, J. 13 Omitted by C. 14 म॰ C, G1, G2, J. 15 ॰या मर्दापीत्म B. 16 ॰न्वा is suggested. 17 मते K. 18 इयेनेनेपोद्द॰ B, इयेनेतिपोपोद्द॰ G1, G2, J, K.

सायस्कसाम तद् भवति ।
तत्रैतज्जरावोधीयमेतद् गायत्रीसामापन्नम् ।
अपि च रुद्रयोनिवधार्थेऽभिरूपम् ।
उद्धरति वषट्कारनिधनम्, तस्य स्थाने समहङ्करोति ।
5 एतद् बृहता समानयोनिवधार्थेऽभिरूपम् ।
उद्धरति बृहत्, तस्य स्थाने वषट्कारनिधनम् ।
एषा देवेषुर्भवति ।
*तामाशीःस्थान ईप्सन्* ॥ १ ॥

संवत्सरे सप्तर्चनवर्चान् करोति, एते प्राणोक्ता इति ।
10 तेषां विलोपेन प्राणविलोपो भविष्यतीति ।
स यत् प्रथमाꣳस्तृचान्, एते रूपसम्पन्ना इति ।
चतुर्ऋचमैन्द्राग्नꣳ समामनामः ।
प्रवत्यासां द्वितीया, तामुद्धरति, सर्वाः प्रवत्यो भविष्यन्तीति ।
गायत्रीणां पृष्ठापदानाद् बृहतीषु मैत्रावरुणसाम करोति त्रिस्थानां बृहतीं
15 पृष्ठेषु चिकीर्षन् ।

तत्रैकं मैधातिथꣳ स्वयोन्यापन्नम् ।
पुरस्तादेतत् स्थानम्, अभिवतीषु होत्रिकपृष्ठानि स्वयोनीनि चिकीर्षन् ।
पराग् बृहतीष्वग्निष्टोमसाम, पैरागनुप्रहरतेति ।
तौ यदावर्त्तयति, एवं प्रवत्या प्रक्रम इति ।
20 तत्र यज्ञायज्ञीयमन्तसमाधये ।
तस्यादरसꣳसङ्क्षेन प्रस्तावयति प्रगाथीकाराय पूर्वस्योध्यान्त्यं मेयाया-
श्रायम् ।

एषोऽक्षरसꣳसङ्कः ।
तद्यत्र यत्रैतेषां तृचापत्तिर्बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चैवमेतेषां
25 प्रस्तावयति ।

---

1 ॰यगायत्रोणाम॰ B 2 रुद्रदेवत्योरिव॰ B. 3 ॰निवधार्थे॰ C; ॰निर्धांध्ववधार्थे॰ G1, G2, J; ॰निर्धांवधार्थे K. 4 C, G1, G2, J add here स्वारे सप्तर्चनवर्चां करोत्येते प्राणोक्ता इति ते. 5 ॰शीर्ध्वनिर्द्रप्सन् C; ॰शीर्धाध्वनि ई॰ G1, J; ॰शीर्षाध्वनि ई॰ G2, शीर्वाध्वनि ई॰ K. 6 G1, G2, J add स्वा 7 तत्रैनन्मै॰ C, K; तत्रैतमै॰ G1, G2, J. 8 स्वयोन्युपन्नं C, स्वायान्यपन्नं G1, G2, J. 9 अनभिवतीष्वप्रवतीषु C; अनंभ( ॰भि J ) वतीष्वप्रवतीषु G1, G2, J, K 10 विराड् Ck. 11 प्रागादनु॰ C, K; प्राणादनु॰ G1. G2. 12 तावदा॰ B. 13 प्रवृत्या C, प्रत्या G1, G2. 14 ॰स्याध्यान्यन्ने या याश्रायन् C. 15 ॰मेवैषां C, K; ॰मेविषां G1, G2, J.

"दैर्घश्रवसं स्यात्तु यदि जायेदिति तु भवति, न चेदेयकल्पमनुमुत दीर्घं शृणुयादिति ।

अपि वा प्रायणार्थमेव स्यात् ।" Ārṣ. K. V. 62 a.

स्वारं च [हिं] भवति प्रवद्योनि चेति[1] ।

5 ककुबुत्तरासु ककुबुत्तरास्थानं हि, सर्वबृहतीष्वेके ।

एवं स्वर्गकामयज्ञे ।

अपि वा स्वर्गोकां बृहतीं स्वर्गकामयज्ञेऽचिकीर्षीत् ।

पुरस्ताद्यानाबृहत्य इति वा ।

तन्त्रे विप्रतिपद्यन्ते ।

10 ज्योतिष्टोममित्येके ।

गायत्रीभ्यां जानीम इति ।

आर्षीस्तन्त्रमित्यपरम् ।

प्रवतीभिरयं क्रुतः ।

ता एताः प्रवत्य इति ॥ २ ॥

15 नैवंनः पठन्त

अथातश्चातुर्मास्यानि ।

स एष षडहो विहृतः ।

तत्र षाडहिकान् स्तोमान् करोति षडहन्यायेन ।

तांस्तु यदेवं प्रयुङ्क्ते, एवं रोहो भवति ।

20 अथापि नानादीक्षावभृथानीमानि पर्वाणि भवन्ति ।

तत्र सर्वाण्यहान्युपक्रमः ।

स्तोमेन प्राचिकमिषीत् ।

अथाप्येवमेनाननवच्छिद्यानन्ततोऽध्यवस्यतीति ।

अंवयन्ति तन्त्राणि पृष्ठानि संस्था इति ।

25 अहां व्युत्क्रमादेकाहिकान्येकाहे, द्वैरात्रिकाणि द्विरात्रे ।

उद्धरति रौत्रिमपरिकाण्डतया द्व्यहस्य ।

---

1 चेदकल्पनुमुत B, चेदयकल्पनुमुत C, नवेदकल्पनुमुतं J. 2 दीर्घः B. 3 स्व० B. 4 Wanting in B 5 वेति C. 6 गेहोऽसि C. G1, G3, J. K. 7 ग्नौ G1, G2, J. K. 8 इहस्य G1, G2, J. 9 ग्ने दी० C. 10 ०र्न् B, ०र्न G1. 11 प्रवन्-नव्यमि० C. G1, G2, J, K 12 In B only. 13 G1, G2, J add इ. 14 ०त्तम C. 15 वपुनरो B. 16 ०क्षावभृथानि B; ०क्षे० G1, G2, J 17 वर्षाणि C. G1, G2, J 18 ०ह०C. 19 ०कमर्षिषत् B. 20 ऽवयन्ति C, भवन्ति G1, G2, J, K 21 ०िकान्येका० C, K ०िकान्येकानेकाहे G1, G2, J. 22 त्रय० B; G1, G2, J omit रात्रि० ... उद्धरति (p. 117. 2).

त्रैरात्रिकाणि त्रिरात्रे ।
उद्धरति वामदेव्यं चास्य प्रत्नं[1] चापरिकाण्डतया ऽग्रहस्य ।
नाना ब्रह्मसामानि, नानात्वार्थं[2] श्यैतनौधसवर्णानीति[3] ।
बार्हद्रथन्तरपृष्ठ्यायौकस्नुचमेवादाशरात्रिकम् ।
5 तदेतत्पूर्णदर्वा[4]नुग्रहाय ।
'शग्ध्यू३षु[5] शचीपते' इति । SV. 1. 253; 2. 929; RV. 8. 61. 5.
प्रथमस्याह्नो ब्रह्मसामस्तोत्रीयो[6] वैश्वदेवस्याय[7] स्थानमापन्नः, एषा विश्ववती भवतीति ।
पञ्चप्रतिपत्कान्यहानि[8] ऋत्वभीज्यायाम्, पञ्चर्तुः[9] संवत्सर इति । cp. PB.
10 18. 9. 5; ŚB. 1. 2. 5. 12; 1. 5. 2. 16.
षण्णामह्नां प्रतिपदः, षडृतुः संवत्सर इति ।
"त्रिष्टुभं वैश्वकर्मणिकं[10] करोति ।
न हि गायत्री विद्यते[11] ।" Ārṣ. K. V. 65b.
समापद्यन्ते त्रिरात्रे भागाः, तदनु[12] द्रव्याणि ।
15 हाविष्मतं[13] द्वितीयेऽहनि त्रिरात्रस्य कुर्यादिति धानञ्जय्यः ।
ऋद्धिसामे[14] मा प्रच्योष्टेति ।
यौक्ताश्वमेवेति गौतमः ।
कृतं[15] हाविष्मतं[13] द्विरात्रे ।
तृतीयस्थानं च हाविष्मतं त्रिरात्रे[16] ।
20 तत्रैतत्[16] संहितं[17] शुनाशीर्यं[18] सन्तानार्थं
'स सुन्वेयो वसूनाम्' SV. 1. 582; 2. 446; RV. 9. 108. 13; PB. 13. 11. 2.
'प्राणा[19] शिशुर्महीनाम्' इति । SV. 1. 570; 2. 363; RV. 9. 101. 1; PB. 13. 5. 3.
25 पञ्चमषष्ठाभ्यामुष्णिक्ककुभौ षडहं[20] समीप्सुः प्रत्याहरति ।
एतेन न्यायेन त्रिरात्र[21]प्रभृतिष्वहर्गणे[22]ष्वेते भवतः ।

---

1 प्रत्नां C, G1, G2, J, K. 2 नानार्थं C, ०र्थे G1, G2, J. 3 ०नि C, K. 4 ०दर्या० C, G1, G2, J, K. 5 शन्ध्यूषु B. 6 ०त्रीया K. 7 एषां C, G1, G2, J, K. 8 ०प्रतिकान्यहाहाः वृत्वभी० G1, G2, ०प्रन्कान्यहाहाः वृत्वभी० J; ०प्रतिकान्यहान्वृत्वभी० K. 9 ०र्त्तवः B. 10 ०र्मणीं C, G1, G2, J, K. 11 ०न्ते B. 12 ०दानु० B, C, G1, G2, J, K repeat तदनु द्रव्यानि ··· अयास्चे ( p. 118 no. 13 ). 13 ०न्तं G1, G2, J. 14 ०सामाप्र० C, ०साम्प्रास्च्यो० G1. 15 J omits त्रे. 16 J omits त. 17 ०नः K. 18 ०नाच G1, G2, J. 19 प्राणाः C. 20 ०हमभीप्सुः प्र० K. 21 द्विरात्र० C, G1, G2, J, K. 22 ०हरगणेष्वेते J.

न चेत्[1] [ कृतागमो[2] भवति ।
द्विपदातिच्छन्दसो[3] दशरात्रन्यायेन, ते जगत्याः पुरस्तान्निदधाति ।
अन्तश्छन्दसी अन्त इति, तेऽयं[4] न सर्वान्ते नाशयनच्छन्दोऽन्तेऽचिकीर्षीत् ।
5 तत्रैता वाजदावर्योऽन्तान्विताः—"अया रुचा"[5] इति । SV. 1. 463; 2. 940; RV. 9. 111. 1; PB. 16. 16. 8.
नित्यवत्सा[6] स्वयोनयः ।
एतेन न्यायेन त्रिरात्रप्रभृतिष्वहर्गणेष्वेते[7] भवतः ।
न चेत् ] स्तोमसंरोधो भवति ॥ ३ ॥
10 अथैते सप्तदशाः ।
तत्र बार्हतेष्वाष्टमिकं[8] पञ्चर्चं करोति, एतद्भक्तिनोह्य इति ।
तार्तीयकं रथन्तरपृष्ठेषु, एतद्रथन्तरभक्तिन इति ।
अनिरुक्तः[9] प्रथमः ।
तत्र यो द्रव्यविकारो निर्वाकार्थेन स भवति ।
15 अथ खल्वाह—"मारुती भवति, पौष्णी भवति, वैश्वदेवी भवति" इति । cp. PB. 18. 1. 14, 15, 17.
केनो[10] विद्यादेतद्देवत्या इमा भवन्तीति ।
एतद्देवत्येषु सूक्तेषु[11] समाम्नाता इति ।
यानि गोस्सामानि तानि सामानि[12] ।
20 अनुपूर्वं संहितमेवैतदाग्निष्टोम्यात् क्रियते[13] ।
स्वर्गकामयज्ञ उत्तरः ।
तत्र यो द्रव्यविकारः स्वर्गकामयज्ञत्वात् स भवति ।
अथ खल्वाह—"सोमपीथस्याऽविदोहाय[14]" इति । PB. 18. 2. 12.
एतदपायवदिति ।
25 स्वर्गकामयज्ञ[15] एवोत्तरः ।
तत्र[16] गोस्सामानि बाहुदाक्षिण्यात्[17] ।

---

1 B omits कृतागमो ··· न चेत् ( line 9 ). 2 कृतागमो G1, G2, J, K. 3 पदा० G1, G2. 4 ते यत्र G1; ते यत्र G2, J. 5 See p. 117 no. 12. 6 ॰वत्स G1; ॰वत्स G2, J. 7 ॰ते ज्ञाय G1, G2, J; ॰वे त्वाह॰ K. 8 स्वाष्ट॰ C, G1, G2, J, K. 9 अनिरुक्तः G1, G2, J. 10 को नो B; केना K. 11 Wanting in C; ॰षु G1, G2, J. 12 ॰न्यम् G1, G2, J, K. 13 C, G1, G2, J, K repeat नत्तुद्रम्याणि ··· अया रुचे after ॰पीथ; C puts 5 after रुचे ( see p. 117 no. 12 ). 14 ॰दोहायेत्यनन्तरभावा ये स्तेतदपोचदिति स्वर्ग॰ C, G1, G2, J, K. 15 ॰काम एव दश G1, G2. 16 तत्रोमे सामनी C, G1, G2, J, K. 17 बहुदक्षि॰ C; बाहुदक्षि॰ G1, J.

अपि वा स्वर्गकामयज्ञत्वादेव ।
एवमिव ब्राह्मणं भवति—"अनड्वाहौ वा एतौ देवयानौ यजमानस्य यद् बृहद्रथन्तरे" इति । PB. 12. 4. 14.
वैश्वयज्ञ उत्तरः ।
5 तस्य कण्वरथन्तरम् ।
"अभि त्वा पूर्वपीतये" इति, SV. 1. 256; 2. 923; RV. 1. 19. 9; 8. 3. 7.
एतासु कुर्यादिति लामकायनः ।
यथा वार्ण्यर्यायाः शूद्रस्त्वल्पमुद्दिशेत्, अतो देशीयमेतद् ।
10 य एतद्रथन्तरस्यर्क्षु कुर्यात् एतासु त्वेव स्यात् ।
तासां हि स्थानमापद्यते ।
अपि चैताः परोक्षपृष्ठे षडह इति ।
"सर्वबृहतीषु नान्यद् बृहद्रथन्तराभ्यामर्हति ।
यत् ककुबुत्तरासु स्यात्" ते खलु विश्ववतीभिः कल्पयति । Ārs. K. V.
15 68a.
एतद्भक्तिर्वैश्य इति ।
तन्त्रे विप्रतिपद्यन्ते ।
ज्यौतिष्टोममित्येके ।
गायत्रीभ्यां जगतीम इति ।
20 आशीस्तन्त्रमित्यपरम् ।
विश्ववतीभिरयं क्रतुः ।
ता एता विश्ववत्य इति ।
तत्र यो द्रव्यविकारो वैश्वदेवीचिकीर्षया स भवति ।
यान्यायुषः सामानि तानि सामानि, अनुतन्त्रं यान्यन्यानि पृष्ठानि,
25 ब्रह्मसामभ्यां विशोविशीयम्, उत्तरस्यामग्निष्टोमसाम ककुबुत्तरासु ककुबुत्तरास्थानं हि ।
स्वर्गकामयज्ञ उत्तरः ।
तत्र खलु गोस्तन्त्रं करोति ।

---

1 Wanting in K. 2 अप्यन्यायाः B. 3 ०त० G1. 4 ०मुद्देशे० B; ०मुद्दिशे० G1, G2, J, K. 5 Wanting in C, G1, G2, J, K. 6 ०क्षे पृष्ठे C, ०क्षपृष्ठये K. 7 ०नान्यत्र K. 8 Wanting in C, K. 9 पक्षमुत्त० C; कुदुत्त० G1, G2, J. 10 ज्योति० C, G1, G2, J, K. 11 ०ष्टोमतन्त्रमि० G1, G2, J, K. 12 जगतीम G1, G2. 13 यान्यानि G1, G2. 14 पृष्ठ B, K. 15 ०स्याग्नि० B.

एतदन्तं[1] तन्त्रतरम् ।
अन्तविधोऽयं भवति ।
"अनिरुक्तं प्रातस्सवनम् ।" PB. 18. 6. 7.
तत्र यो द्रव्यविकारो निर्वाकार्थेन स ह्वं भवति ।
5 अथैतद्वस्थानं[3] स्थितनिधनम्, उतास्मिन् श्रीस्तिष्ठेदिति ।
तस्य रथन्तरं पृष्ठं वाजपेयसामैर्निर्वृह्त् करिष्यन् भवति ।
अह्नोक्तो[4]ऽर्कः, वाजोक्रमघम् ।
'त्वं नश्चित्र ऊत्या' इति SV. 1. 41; 2. 973; RV. 6. 48. 9.
वारवन्तीयमग्निष्टोमसाम ।
10 एता राध[5]सत्यः स्वर्गकामयज्ञेऽभिरूपाः ककु[6]बुत्तरासु ककुबुत्तरास्थानं हिं[7], सर्वबृहतीष्वेके ।
तद् व्याख्यातं सर्वस्वारे[8] ।
धनुतन्त्र[9]मुक्थं[10]प्रणयः ॥ ४ ॥
"अथैषोऽभिषेचनीयः ।" PB. 18. 8. 2.
15 "तस्य द्वात्रिंशाः पवमानाः ।" PB. 18. 8. 3.
अनुपूर्वमावृत्तिस्थानेषु पञ्चदशप्रभृतीन् भाग[11]तस्तोमानिति ।
ते प्रा[12]तस्थाना इति ।
तत्रोभे सामनी वाहु[13]दाक्षिण्यात् ।
अथाप्युभे वीप्सा[14]याया अभिरूपे ।
20 उक्थसंस्थं करोति ।
द्वितीयेयमिज्या ।
तत्र द्वितीयां संस्थामिति व्याख्यातम् ।
बहिष्पवमानमन्यत् कथिमतः ।
ते[16] खलु शश्वद् भाल्लविन आग्नेयीं पावमानीमुद्धरन्ति ।
25 यथा त्रिवृतं न वयमुद्धरामः, पृष्ठेभ्य इयं प्रति, एवं पृष्ठानामविलोपे इति ।
अथापि स्तोमः[17] प्रधानतरश्छन्दस इति ।
आनुष्टुभं पर्यायं[18] करोति[19], आनुष्टुभोऽभिराजेति[20] ।

---

1 ०न्तनन्त्र० C, G1, G2 J, K. 2 Wanting in C, G1, G2, J, K 3 ०र्हि० G1, G2, J, K. 4 अह्नोक्तो० C. 5 राद्धसत्य B. 6 ककुप्परः स B. 7 ०दमि B. ०स्थानं हि० G1. 8 ०स्वारो C; ०सुरे G1, G2, J, K. 9 ०न्तत्र० B. 10 ०थः प्रणवः B; ०थप्रणयाय Ck. 11 भागस्तोमाने C, G1, G2, J, K. 12 प्रातस्था० C, G1, G2, J, K. 13 आहुरदक्षि० C; बाहुरदक्षिणपक्षपातत्वा० G1; बाहुरदक्षिणपक्षा० G2. 14 ईप्सायामभि० C, G1, G2, J, K. 15 तत्र C. 16 ०ज्जोऽव G1, G2, J. 17 सोमम० K. 18 पर्यासं C, G1, G2, J, K. 19 करोतीति B. 20 ०भो हिराजेति C, ०भो हिराजे G1, G2, J, K.

"तासां मध्यमामुत्तमां कुर्मः"[1], सूर्यवत्यन्तेऽभिरूपेति । Ārṣ. K. V. 71a.

सम्भार्यान्वितान्याज्यानि ।
अथ खल्वत्र राजसामानि करोति, राजसूयो राजसामानीति ।
5 एकादश करोति त्रिष्टुप्सम्पन्नानि, त्रैष्टुभोऽभि[2]राजेति ।
सर्व[3]च्छन्दस्यानि करोति ।
स्वस्यै कृत्स्न[4]विकाराय न पाङ्क्तं करोति, न हि पाङ्क्तं राजसाम विद्यते ।
एकमुदाहरन्ति सत्यश्रवसो वाय्यस्य—
'महे नो अद्य बोधय'[5] इति । SV. 1. 421; 2. 1090; RV. 5. 79. 1.
10 अ[6]राजसूययाजी स बभूव ।
नेहा[7]राजसूययाजिनां सामानि क्रियन्ते ।
बार्हतानि[8] भूयिष्ठानि करोति ।
सवनच्छन्दो बृहती ।
अथाप्येतन्म[9]ध्यन्दिनच्छन्दो भवति ।
15 बार्हतानि[10] वा भूयिष्ठानि लभन्तं इति ।
द्वे गायत्रीसाम[11]नी करोति ।
द्वे हि[12] पवमानमुखयोर्गायत्र्यौ भवतः ।
ते कुशलं यदनुपूर्वं[13] पञ्च माध्यन्दिने[14] षडार्भवे, एवं रोहो[15] भवति ।
देवस्थानं वरुणसाम सोमसामेति देवराज्ञा[16]म् ।
20 सैन्धुक्षितं दैर्घश्रवसं पार्थं काक्षीवतं ब्राह्मणसाम सैं[17]द्राजसामसूपसङ्ख्यायते ।
क्षत्रमार्गेण चचार राजसूययाजी बभूवेति ।
दैवोदासं बाभ्रयश्वं वैतहव्यं त्रासदस्यवमिति मनुष्यराज्ञाम् ।
द्वैपद उक्थप्रणयः ।
25 विभ्र[18]श्शार्ङ्गमिदं कर्म ।
द्विविधेन प्रतिष्ठेति[19] ।

---

1 कुर्युः C. 2 ॰भो हि रा॰ C, G1, G2, J, K. 3 सर्वस्य C, G1, G2, J, K. 4 कृत्स्नीका॰ C, G1, G2, J, K. 5 बोधयन्ति । J. 6 राज॰ C, G1, G2, J, K. 7 नेह रा॰ C. 8 ॰म्या॰ C. 9 वाव C, G1, G2, J, K. 10 ॰त C, G1, G2, J, K. 11 ॰सामानी G1. 12 बहिष्पवमानं मु॰ C, G1, G2, J, K. 13 ॰पूर्व्यं B. 14 ॰नेव G1, G2, J; ॰ने च K. 15 करोति हा for रोहो in B. 16 ॰राज B. 17 सदद्राजसा॰सू॰ B; साद्रसामसूयसं॰ G1, G2, साद्राजसामसूयसं॰ J. 18 ॰भ्रमुस्यं चयेन प्र॰ B. 19 ॰ष्ठति G1, G2.

तत्रैतत् सत्रासाहीय२ं सोदसंहीयं नाम राजयज्ञेऽभिरूपम् ।
अनुपृष्ठमितरे ।
सदोविशीयं दशपेयस्य मध्यन्दिने विशीयं राजयज्ञेऽभिरूपम् ।
वारवन्तीयम् अग्निष्टोमसाम स्वास्त्वेव२ं सुवारवन्तीयमिति ॥ ५ ॥
5 "प्रतीचीनस्तोम उत्तरः ।" Ārṣ. K. V. 72 a.
तं खलु बृहत्पृष्ठं करोति ।
एतद्भक्तिः क्षत्रिय इति ।
अतिरात्रसꣳस्थं करोति ।
चतुर्थीयमिज्या, तत्र चतुर्थी२ं सꣳस्थामिति ।
10 अथापीदं द्वितीयं यज्ञस्थानं, यदर्हानो द्वितीयो वर्णः क्षत्रिय इति ।
ज्योतिष्टोमं तन्त्रमेतत् ।
इह भक्तितन्त्रयोरयमु लोकः क्षत्रियस्येति ।
स्तोमकारित आयापः ।
व्युष्टिद्विरात्र उत्तरः ।
15 तत्रामुमेव द्विरात्रमाहरति ।
तत्र दशस्तोत्रीया उपाहरति ।
संवत्सरसम्पदे चतुर्विꣳशावुत्तरौ पवमानौ करोति ।
बहिष्पवमानसमाधये सप्तदशत्रिणवौ प्राच्यावर्तयति ।
तावनन्तरयोः स्तोत्रीययोरनुगृह्णाति ।
20 एकविꣳशान्युक्थानि करोति ।
विभ्रꣳशाशङ्को द्विरात्रः ।
तत्रामुमेव प्रतिष्ठास्तोममभिप्रायुङ्क्ते ।
अथैतद् विꣳशोविशीय२ं राजयज्ञेऽभिरूपम् ।
क्षत्रस्य धृतिः किमर्थमिति ।
25 आलुब्धजनपदोऽय२ं राजा, तस्य क्षत्रसंयमार्थः क्षत्रसंयमार्थः ॥ ६ ॥

दशमः पटलः

अथैतान् द्वन्द्वा इत्याचक्षते ।
तेन सर्वे द्वन्द्वा द्वन्द्वे[17] मिथुनवन्तो भवन्ति ।

1 सोदवज्ञाम रा० C, सोदवज्ञे रा० G1, G2, J. 2 दशपेय० B, K. 3 वारवन्तीयम् C. 4 सु is wanting in C. 5 B omits स्तोम. 6 J omits द्वितीयं ··· यदर्हानो. 7 ज्यो० K. 8 स सम्र० B. 9 ०यतो B. 10 तन्त्र० B, G1, G2, J. 11 स्तोमकोर० C, J, G1, G2, K. 12 क्षत्रियस्य C. 13 धृतिः B. 14 ०र्थं इति G1, G2, J, K. 15 In B only 16 नवमो C. 17 द्वन्द्वान् G1, G2. 18 मिथुनाद C. मिथुनाद्व G1, G2, J, K

यौ यावेषा॑ं समानमर्थमुपकृतौ तौ [तौ[1]] द्वन्द्वौ भवतः ।
राज्यकामयज्ञः प्रथमः ।
तस्य यदेवंविधि[2]स्तोमयोग एवमष्टावेकवि॑ंशान् सम्पद्यत इति ।
सप्तदशं पवमानेषु निदधाति ।
5 एष विद्स्तोमो भवति ।
विद्कामो राजा ।
अथाप्येते ग्रामा इव सुत्याया यत् पवमानाः सम्पूर्णा[3]श्छन्दोभिः सामभिरिति ।
तत्र विद्स्तोम॑ं सप्तदशमचिकीर्षीत् ।
अनुपूर्वमा[4]वृत्तिस्थानेष्वितिशिष्टान् भागस्तोमान् ।
10 एवं चतुष्टोमो भवति ।
विभ्र॑ंशाशङ्कमिदं कर्म ।
स चतुरेण प्रतिष्ठेति ।
व्याख्यातमौभयसाम्यमभिषेचनीये ।
ज्यौतिष्टोमं तन्त्रम्, तद् व्याख्यातं केशवपनीये ।
15 अन्नाद्यकामयज्ञ उत्तरः ।
तत्र च[5]तुर्ऋचमाहरति ।
एतदन्नाद्यस॑ंस्तावमिति ।
औ[6]महीयवादुत्तरमाभीकम् ।
एतद्वृष्टिस॑ंस्तावं वृष्टिर्जं[7]मघ्नमान्धीगवादर्कपुष्पम् ।
20 एतदन्नाद्यस॑ंस्तावमिति ।
प्रजाति[8]कामयज्ञ उत्तरः ।
तत्रैकर्चमुपाहरति ।
एषा वृषण्वती प्रजातिकामयज्ञेऽभिरूपा, अन्तरिक्षप्रवादान्तरिक्षायतनां गन्धर्वाप्सरस इति ।
25 तत्र यो द्रव्यविकारः प्रजातिका[10]मयज्ञ[11]त्वात् स भवति ।
शुं[12]शुत्सयज्ञ उत्तरः ।
"तस्य द्वादशं माध्यन्दिन॑ं सवनं त्रिवृती अभितः ।" cp. Say. PB. 19. 4. 2
एवमिव ब्राह्मणं भवति—"यैकादशी", "या द्वादशी" इति । cp. PB. 19. 4. 3. 4.
30

---

1 Wanting in B, G1, G2, J, K. 2 ०विधःस्तो० C, K, ०विधःस्तौ० G1, G2, J. 3 पूर्णा छ० G1, G2, J, K. 4 ०ावर्त्ति० C, G1, G2, J, K. 5 चतुरात्र० B. 6 अथामही० B. 7 ०जमेवमन्न० C; ०अजन्न० G1, G2; ०जमन्ना० J. 8 प्रजापति० Cख, G1, G2, J, K. 9 ०ाय B. 10 काम is wanting in J. 11 ०यज्ञा G1; ०यज्ञात् G2. 12 शुशुत्स० C, K.

एकादशीः प्रातःसवन उपसञ्चत्वीत द्वादशीस्तृतीयसवने।
एवं गरस्य व्यपादान[1] सिध्यतीति।
तदपि शश्वद्ध्वर्यव उदाहरन्ति।
स्तोमो वै त्रिवृतः, स्तोमो द्वादशः।
5 यत् त्रिवृतो द्वादशमुपयन्ति पुनर्द्वादशात्त्रिवृतं तस्मादेतेन स्तोम इत्युक्थसस्थं करोति।
एवमेतासा[2] स्तोत्रीयाणां व्युत्पादान[3] सिध्यतीति।
स्तोमकल्पायैक[4] साम मध्यन्दिने उपाहरति।
स यन्मैधातिथम्।
10 एतस्यारिष्टवती योनिः प्रायश्चित्तकृत्येऽभिरूपेति[5]।
अत्रस्तो(?) यो द्रव्यविकारः शुशुंतसयप्रत्वात् स भवति ॥ ७ ॥
पशुकामयज्ञ उत्तरः।
तत्र चतुष्पर्यायान् स्तोमान् करोति।
"चतुष्पादाः पशवः" इति। PB. 19. 5. 3.
15 तदपि शश्वद् ब्राह्मणं भवति—यश्चतुश्चतुर्दिद्धरोति।
अथ सर्वेषानुष्टुभः प्रतिपदः करोति।
पशुकामयज्ञे चतुष्पदा अभिरूपा इति।
तास्तिस्रः सतीश्चतस्रो गायत्रीः करोति।
गायत्रीस्थान[6] हि भवति पारयन्तीयं यज्ञायज्ञीयेचतुर्थेपृष्ठस्तोत्रीयेषु।
20 एवमिव ब्राह्मणं भवति—"नोक्थो नाग्निष्टोमः" इति। PB. 19. 5. 11.
यदु पारयन्तीयं पशुस[7]स्तावं च।
अपि च स्तोत्रीयाणा[8] सन्निवारणाय।
"पशुकामयज्ञ एवोत्तरः।" Say. PB. 19. 6. 1.
तत्र चतुर्ऋचमाहरति।
25 एतत् पथ्यं छन्द इति।
षोडशिसस्थं करोति।
एवमिव ब्राह्मणं भवति—"नोक्थ्यो नातिरात्रः" इति। PB. 19. 6. 3.
पशुकामयज्ञत्वाद् गायत्र उक्थप्रणयः।

---

1 उपाद॰ C. 2 हि is wanting in G1, G2, J. 3 ॰शार्ति॰ B. 4 तस्मादेव C. G1, G2, K; तस्मादेवा J. 5 पुनस्तोम C, G2, J, K; पुनस्तो G1. 6 व्यापादानं॰ B; व्युत्पादान॰ G1, G2, J; ॰नाभुत्पादान॰ K. 7 ॰न उप॰ B. 8 ॰वेऽरूपेतो यो द॰ C; ॰वेलेतो यो द॰ G1, G2, J, K. 9 द्रुपु॰ C. 10 ॰त्वात् C 11 ॰पदाः G1, G2, J. 12 अत्र B; अ G1, G2. 13 ॰स्नापातृ॰ G1, G2, J, K. 14 सतो॰ B. 15 ॰यं च॰ K.

पशुकामयज्ञावेवोत्तरौ ।
अपि वा द्विरात्रास्तिमुपकृतौ स्याताम् ।
उभयेज्यांनियोगात् सप्तिसप्तदशंस्तोमौ करोति ।
एतौ पशुसंस्तावाविति ।
5 एकविंशमुत्तरस्य बहिष्पवमानं करोति ।
त्रिकं होतुराज्यम् ।
समायावेकाहौ व्यौविवर्तयिषन्नेतस्मिन् तदेकविंशे पराक्रम्य त्रिकेण वज्रेण बलं विभेदेति लामकायनः ।
ता उ सप्तिसप्तदशावेव सम्पदेति ।
10 नानातन्त्रे नानापृष्ठे द्विरात्रन्यायेन सञ्चारयति चें न च सञ्चारयँति ।
एकाहन्यायेनाहःसञ्चारणम् ।
द्विरात्रन्यायेनासञ्चारणम् ।
जतुपैकवौ द्विरात्रन्यायेन निषेधान्धीगंवे द्विरात्रन्यायेनाञ्जत इति ।
कावमन्त्यम् ।
15 एषा सामॅन्या तृचप्रथमा पशुप्रवादेति ।
सत्रासाहीयंश्रुध्ये द्विरात्रन्यायेन, श्यावाश्वकौञ्चे द्विरात्रन्यायेन ।
'अग्रेगो राजाप्यस्तविष्यते' इति । SV. 2. 966; RV. 9. 86. 45.
कॉवमन्त्यम् ।
'अग्रेगो' इति ।
20 अह्वेयं भवतीति शाण्डिल्यायनः ।
गोप्रवादात्तु स्नातकाः कुर्वन्तीति ॥ ८ ॥

अपचितिकामयज्ञ उत्तरः ।
तत्र चतुर्विंशायंष्टान् करोति ।
एवमिव ब्राह्मणं भवति—"वि ह्यौतयन्तीति ।" PB. 19. 8. 6.
25 चतुर्विंशात्रिणवाविति वैतद् भवति ।
चतुर्विंशं पवमानयोर्निदधाति ।
तेन प्रच्युतौ त्रिवृत्सप्तदशावाज्यपृष्ठेष्वनुगृह्णाति ।

---

1 ०ज्यानि ज्योगात् तत्र स० C; ०निज्योगात्तत्र स० G1, G2, J, K. 2 ०शौ स्तो० C, G1, G2, J, K. 3 व्यावर्त्त० B. 4 ०भेदिति B. 5 व च न सञ्चा० G1, G2, J, K omit च. 6 ०येति G1, G2, J, K. 7 औदलान्धी० C, G1, G2, J, K. 8 ०म० B, Ck. 9 ०य२सु० C, G1, G2, J. 10 दावम० Cb, वदावम० G1, G2, J, K. 11 ०ह्वेयं B. 12 G1, G2 add राजाप स्तविष्यत इति after गो. 13 षष्ठान्··· चतुर्विंशं (line 26) is wanting in G1. 14 सयन्ती० C, G2, J. 15 ०विताबे C, J, K.

ज्योतिष्टोमं [ तन्त्रम्, एतदपचिततरं तन्त्रयोरिति ।
स्तोमकारित आवापः ।
अपचितिकामयज्ञ एवोत्तरः ।
तस्योक्ताः स्तोमाः ।
5 तस्य यदेवंविधः स्तोमयोगः, एवं "विराज[2] सम्पद्यत" इति । PB. 19. 9. 2.
द्विपदाः करोति ।
दशरात्रन्यायेन स यदेताः, एता दशरात्रावसाने दृष्टा इति ।
तत्र वारवन्तीयमन्तसाम, अन्तच्छन्दसि ।
10 सूर्यवत्यो दशरात्रन्यायेन ।
अग्न्यभियजन उत्तरः ।
तत्रोभे सामनी करोति ।
अग्न्यभीज्यां कृत्स्नीचिकीर्षन् ।
तथाप्युभयसामाग्निर्भवति ।
15 उभाभ्या[3] हि परिगीयत इति ।
ज्योतिष्टोमं ] तन्त्रम्, एतदाग्नेयमिति ।
स्वार[4] सौपर्णं पक्षिसाम पैद्यभीज्यायाम्, अग्नेर्व्रतम् अग्न्यभीज्यायाम्, स्वाशिरामर्कोऽग्न्यभियजने व्रते दृष्टो भर्वति ।
अग्न्यभियेजन एवोत्तरः ।
20 तत्र ज्योतिष्टोममेवाहरति, एतदाग्नेयमिति ।
त्रिवृत्पञ्चदशावाज्यपृष्ठेषु सम्पद्ग्रहेण कुर्मः ।
व्याख्यातमौभयसाम्यम् ।
ज्योतिर्ह्येवायं विकृतः ।
तत्रौदलमनुष्टुभि वचसमाप्तये ।
25 तदेतदष्टमात् पृष्ठान्वितम् ॥ ९ ॥
राजयज्ञ उत्तरः ।
तत्र ह्रे स्तोत्रीये पाहरति ककुद्रूपं दिदर्शयिषन् ।
अपि वा सदोविशायसामान्ते गृह्यमाणे सप्तदश कारयेताम् ।

1 B omits तन्त्र ''' ज्योतिष्टोमं (lines 1-16). 2 ०त्माने C. 3 ०रकर्ते B. ०र्त्तं J. 4 पद्यभीद्यायाम् Cक; पद्माभीं( भि J )० G1, G2, J, K. 5 ०भीद्यायाम् Cक; ०भ्यीयांयाम् G1, G2. 6 Wanting in B. 7 ०भियन B; अग्नियजनान्द्राभीस्यादपने G1, G2, J; अग्नियजन K. 8 ०ऽ J. 9 ०साम C, G1, G2, J, K. 10 स्तो० B. 11 तदष्मात् G1, G2; वाष्टमात् J. 12 ०सामन्ते B, K; ०सामांत G1, G2, J.

विषमे स्तोमे सत्यनध्यासां बृहतीं करोति ।
ज्योतिष्टोमात्[1] तस्याः सौमकल्पो व्याख्यातः ।
अग्निष्टुति व्याख्यातमौभर्यसाम्यम्[2] ।
ज्योतिष्टोमवायं विकृतः[3] ।
5 तत्र गौरीवितमनुष्टुभि, एतदृषभोक्षमिति ।
वैश्ययज्ञ उत्तरः ।
वैश्यस्य राजमात्रस्य स्वाराज्यमिच्छतो यज्ञः स्यादित्याहुः ।
राज्ञ एव खल्वयं[4] संविरतस्य साहसिक्याद् ।
विड्भूतस्य कितवाशयस्य सवः स्यादिति शाण्डिल्यः ।
10 अभिषेचनीयं प्रत्युपधावति ।
सवसामान्याद् द्वात्रिंशापायादनुष्टुभः प्रतिपदोपयन्ति ।
कुशलं यदुपवतीमेषा राथन्तरी, राथन्तरो वैश्य इति ।
व्यत्यासेन नित्यां बृहतीं करोति ।
समो हि स्तोमः ।
15 व्याख्यातावुत्तरौ ।
राजयज्ञ उत्तरः ।
तं खलु बृहत्पृष्ठमिन्द्रन्यङ्गाभिः कल्पयति ।
एतद्भक्तिः क्षत्रिय इति ।
तत्र या इन्द्रवत्यो विस्पष्टास्ताः ।
20 अथापि वृत्रहप्रवादेन वृषण्वत्[12] प्रवादेन[13] सूर्यवत्तयेत्यैन्द्रं[14] रूपमनुगृह्णन्
मन्यत इति ।
तन्त्रे विप्रतिपद्यन्ते ।
ज्योतिष्टोममित्येके ।
गायत्रीभ्यां जानीम इति ।
25 आशीस्तन्त्रमित्यपरम्[15] ।
इन्द्रवतीभिरयं क्लृप्तः, ता एता इन्द्रवत्य इति ।
तत्र यो द्रव्यविकार ऐन्द्री[16]चिकीर्षया सं[17] भवति ।
राजपुरोहितयोर्यज्ञ उत्तरः ।

---

1 ज्यो॰ K. 2 ॰म्यात् C, G1, G2, J, K. 3 साकमल्पो Cक्ष, G1, G2, J. 4 ॰यं सा॰ K. 5 ॰तिविर्ष॰ G1, G2, J, K. 6 प्रवि॰ G1, G2, J, K. 7 ॰मीप्सतो C, G1, G2, J, K. 8 सविपरीतस्य B; 9 ॰शादपायाद॰ C; ॰शपायाद॰ G1, G2, J; ॰शापयोद॰ K. 10 कुलं B. 11 ॰वीती॰ G1, G2, J, K. 12 वृषावद् B; wanting in G1, G2. 13 Wanting in G1, G2. 14 सूर्यवर्चोयन्त्यैन्द्रं B. 15 ॰मं तन्त्रमि॰ C; ॰मतन्त्रे । G1, G2; ॰मतन्त्रमि॰ J, K. 16 ॰न्द्रे चि॰ B. 17 संभ॰ G1, G2, J, K.

तत्रोभे सामनी, उभयानि व्यञ्जनानि, द्वैयह्ना[1] ज्योतिष्टोमं तन्त्रं नित्यं ब्राह्मणस्यो[2]क्तो[3] यज्ञं क्षत्रियस्य ॥ १० ॥

विजिघांसद्यज्ञ उत्तरः ।
तत्रोभे सामनी करोति ।
5 विजिघांसद्यज्ञं[4] कृत्स्नं[5] चिकीर्षन् ।
तत्रैतद् विशोविशीयं विजिघांसद्यज्ञेऽभिरूपम् ।
सोमसामाथर्वणं वे[6]त्यभिचरतः ।
सोमसामैतत् क्रूरनिधनम् ।
तस्य निधने विचारयन्ति—
10 "इन्द्र इव दस्यूंर् रमृणा २३१११ सूर्य इव दस्यूंर् रमृणा २३१११ वज्रिन् सुवज्री २३१११ न् ।" LŚ 7. 10. 12; cp. Upg. 3. 8.
"अपि[7] वैतेषां द्वे पूर्वे वोत्तरे वा सर्वाणि वा समस्यन्नन्त्यमेव स्वरयेद्[8], यथा वायोर्भज्यमा[9]ना निहन्यमानायाः ह्रादः स्यात्, यथा वायसी[10] सम्मृच्छेयाताम्, यथा [वा] निष्कः[11] कृन्त्रेणाभिहतो[12] ध्वनेत्, यथा
15 वा सन्नूपुरस्य[13] पादस्य [14]निघातस्य ।" cp. Upg. 3. 8.
क्षुणाति चाथर्वणम् ।
पशुकामस्यैतच्चतुर्निधनं पशुकामयज्ञेऽभिरूपम् ।
एवमर्थं एवोत्तरः ।
अपि वा[16]नाज्ञातमायश्चित्तये, यत्रानो[17]ज्ञातं भयमागच्छेत्, यथा मो[18]ऽटवमा-
20 जगाम ।
यथा वि[19]हन्तु शिरो, यथा वयः[20]पतनम् ।
तदप्येवमिव ब्राह्मणं भवति—"इन्द्रमदे[21]व्यो माया असचन्त" इति शाण्डिल्यायनः । PB. 19. 19. 1.
एवं नूनं तद्विद्वांश्चकारे[22]ति ह स्माह धानञ्जय्यः ।
25 यदर्थ[23]मिममाजहारानाज्ञात इव खल्वयं योगो भवति ।
तत्र त एव स्तोमा ये पूर्वस्य ।
तांस्[24]तु यदेवं प्रयुङ्क्ते[25] समायावेकाहौ[26] व्यावर्तयिषन् ।

1 मै C, G1, G2, J; द्वैयह्नात् is suggested here. 2 ०क्तु० B. 3 ०क्ता B. K. 4 ०यज्ञं G1, G2, J, K. 5 कृत्स्नी B. 6 B omits वे. 7 ०पादर G1, G2, J, K. 8 वायेभ० G1, G2, J, K. 9 ०माना G1, G2. 10 ०यसौ C. 11 Wanting in B; व K. 12 तंतत्रेणाभि० G1, G2. 13 ०न्नपु० C, G1, G2, J; संन्नपु० K. 14 नूखात् स्यात् B. 15 ०मेव G1, G2. 16 G1, G2, J omit वा. 17 यत्राज्ञा० K. 18 मातवमा० B. 19 यथापि हन्तु B. 20 वयःप० C, G1, G2, J, K. 21 मसचन्त K. 22 रेति G1, G2, J; ०करिति K. 23 इदम० B. 24 मार्गस्तु B; तान्स्तु G1. 25 ०ङ्क्ते प्रा० C. 26 ०व्यावर्त० B.

तन्त्रे विप्रतिपद्यन्ते ।
उभयसामतन्त्रमित्येके ।
प्रलवत्यो होता माध्यन्दिनीया इति ।
आशीस्तन्त्रमित्यपरम् ।
5 अनाज्ञातप्रायश्चित्तयेऽयम् ।
तत्र[1]नाज्ञातयोगा[2]ꣳश्चिकीर्षन् गायत्र्याः स्थाने[3] द्वे बृहत्यौ निदधाति ।
ते संव्यूह्य[4] तिस्रो गायत्रीः करोति ।
गायत्रीस्थानꣳ हि भवति ।
तत्र यो द्रव्यविकारोऽनाज्ञातप्रायश्चित्तये स भवति ।
10 अपि च विजिघाꣳसया ॥ ११ ॥
अभिचरणीयावेवोत्तरौ ।
तयोः श्येनेनैवं[5] द्रव्यसमुद्देश उक्तः ।
ये पूर्वयोः पूर्वस्य स्तोमास्ते[6] तयोः पूर्वस्योद्धरति ।
सप्तदशनवदशौ प्रजा[7]तिसꣳस्तावाविति ।
15 षडतिशिष्टाँ[8] द्विस्तोत्रभाजः करोति, सन्दꣳशरूपं दिदर्शयिषन् ।
एडं ककुभि करोति, पुरुषच्छन्दसः स्वरं विच्यावयिषन् ।
तत्रैतत् कारीतं क्षीणस्व[9]रेडं, त्र्यं परेषामिच्छं[10]तीति ।
सामानुष्टुभि करोति , एतानि क्रूराणि सामानीति ।
स यत् त्रयाणां प्रथमे[11]मायतनामिति, पूर्वाध्यायं पूर्वे यज्ञस्थाने ।
20 अथाप्येतत् क्रूराणिधनं वधार्थेऽभिरूपम् ।
अथापि बृहन्निधनेनानुगृह्णाति, एषं[12] वै सामवज्र इति ।
बृहद्रथन्तरयोर्वदति ।
स्तोभकल्पौ[13]योत्तरे विहितै[14]वन्तौ तृचावाहरति ।
तत्र देवे[15]साम स्यादिति धानञ्जय्यः ।
25 समानार्थौ[16] हि भवतः ।
द्वितीयमिति गौतमः ।
सप्रायावेकाह्नौ व्यावर्त्त[17]यिषन् ।

---

1 तन्त्रो० B; तात्राता G1; तंत्राना० K. 2 श्चा G1, G2, J, K. 3 Wanting in G1, G2, J 4 संव्युह्य C, G1, G2, J, K. 5 श्येनैव C, G1, G2, J, K 6 ०मात्वे B. 7 प्रजापति० G1, G2. 8 ०ष्टाद् C, ०ष्टान G1, G2. 9 ०स्वतरैडं B. 10 ०न्तीति B. 11 प्रथमेतदानुष्टुभ( ०भि K )मिति C, G1, G2, J, K. 12 एषु B. 13 ०ल्प K. 14 ०इ० B. 15 तदेव सा० C 16 ०र्थौ K. 17 ०वर्तयिषन्न B; व्यावि-वर्त्तयिष्यन् G1, G2, J, K.

अथाप्येतद[1]भिनिकृष्टगीति[2] यथार्थेऽभिरूपम्।
व[3]ज्रोकं मम [4]हिष्ठीयमुक्तो यज्ञमौपगवम्।
ऐडत्वात् षोडशिसाम्नो[5] न[6] नार्मेधं करोति।
तत्रैतदुद्व[7]शीयम्। एतेनेडाकामश्च सिध्यति, अजामिकल्पश्चेति ॥ १२ ॥
5 महानाम्नीः षोडशिसाम।
एता वज्रोक्ता राजयज्ञेऽभिरूपाः, वज्रो[8] हि राजेति।
कथं धर्मा इति।
कर्त्तव्या इत्येके।
अपि ह्यासामेव स्वाध्याये धर्मो भ[9]वतीति। cp. Upg. 3. 5.
10 अथापि [10]धर्मिस्थानमापन्नाः।
षोडशिधर्मान् कुर्वन् कथं महानाम्नीनां धर्मान् न कुर्यादिति।
अथापि वज्रोक्ता आप [11]इति।
अथापि सं[12]शयेऽलोपो लोपान्[13] न्याय[14]तर इति। cp. Upg. 3. 5.
अकर्त्तव्या इत्यपरम्।
15 पृष्ठापन्नानां वदति यद्रूप[15] उपनिधाय स्तुवत इति।
य[16]द्वेतदपि ह्यासामेव[17] स्वाध्याये धर्मो भवतीति, अन्यान्[18]प्येवंवादः स्वाध्यायधर्मान् [19]प्रतीयाद्। cp. Upg. 3. 5.
यद्वेतद् धर्मिस्थानमापन्ना इति, धर्मिस्थानमापन्नतरं खलु सद्व[20]तरं न धर्मां[21]ल्लभते।
20 य[22]द्वेतद् वज्रोक्ता आप[23] इति, शान्त्युक्ता आपः, "अप[24]ः पश्चात् पत्न्य उपसृजन्ति, वैश्वानरमेव तच्छमयन्ति, आपो हि शान्तिः" इति ह्याह। PB. 8. 7. 8.
यद्वेतत् सं[25]शयेऽलोपो लोपान्[26] न्यायतर इति, यो [27]रथन्तरधर्मानकृत्वा महानाम्नीनां धर्मान् कर्तव्यान् म[28]न्येत सद[29]श्यव्याघातः।
25 अथापि तस्य वज्रोक्ततरा धर्मा इति धर्मा इति ॥ १३ ॥

---

1 ०दभिनआत्तिष्टगीति B. 2 ०गीभि G1, G2, J, K. 3 यज्ञोकं B. 4 ०ष्ठीयं मु० G1, G2, J, K. 5 ०म्ना G1, G2, J. 6 C omits न. 7 ०श० G1, G2. 8 ०ज्रो G1, G2, J, K. 9 भवति G1, G2, J, K. 10 धर्मि is wanting in B. 11 Wanting in C, G1, G2, J, K. 12 ०योलो० C, J; ऽलोपो is wanting in J. 13 ०पा G1, G2, J, K. 14 ०य्य० C. 15 ०दा G1, G2 but G2 adds प. 16 तद्वे० G1, G2. 17 ०मे G1, G2. 18 अन्यान् is wanting in C. 19 कुर्याद् C, G1, G2, J, K. 20 सद्यन्तरं C, G1, G2, J, K. 21 ०र्तिहं० C; ०र्मांल० G1, G2, J, K. 22 G1, G2 omit यद्वे. 23 आपश्च C. 24 यः K. 25 G1, G2, J omit लोपो. 26 ०पा G1, G2, J, K. 27 ये B. 28 मन्वत G1, J; मन्य तत् G2. 29 ०इयमइन्याम्या० G1, G2, J, K.

# अथ अष्टमः प्रपाठकः

अथातो[1] अहीनाः[2][3] ।
तेषामुक्तो द्रव्याणामन्वयः ।
अथापि दशरात्रावलोपाहीनाः[4] ।
तत्र सिद्धानि दाशरात्रिकाणि द्रव्याणि ।
5 आहीनिक्यां[5] रात्रेः औतकक्षस्य[6]र्चोऽर्पनयति[7] ।
सत्रं च[8]आहीनं च व्याविवर्तयिषन्[9] ।
तत्रैताः करोति—
'पन्यंपन्यमित्सोतारः' इति । SV. 1. 123; 2. 1007; RV. 8. 2. 25.
एताः सुतवतीनाꣳ स्थाने सुतवत्य इति ।
10 "मध्यमस्य रात्रिपर्यायस्य होतृणामणी विचारयन्ति ।
दैवोदासं[10] वा स्यादौर्ध्वसद्मनं वेति ।
विकल्पो वा स्यात् ।" Say. PB. 9. 2. 12.
अपि[11] वा दैवोदासमहीने[12] कुर्यात् ।
पूर्वाध्यायं पूर्वे यज्ञस्थाने, और्ध्वसद्मनं[13] सत्रेषु, उत्तराध्यायमुत्तरे यज्ञस्थाने ।
15 अथाप्यस्मिन् सम्प्रवादरूपो भवति ।
"और्ध्वसद्मनमपि शर्वरीषु प्रोहन्ति ।" [इति[14]] । PB. 9. 2. 10.
अथ खल्वाह—"त्रिणिधनं भवति" इति । PB. 9. 1. 14.
कथं त्रिणिधनꣳ स्यादिति ।
एतान्येवं[15] निधनानि व्यवस्यन्त उपेयुः, सुवृक्तिभी २३४५ नृमादना
20 २३४५ म् भरे २३४५ षु वा २३४५ इति ।

---

1 In C only. 2 G1, G2 add ओं. 3 अहीनां B. 4 ०त्राविलोपो० B. 5 ०का रा० B. 6 ०सार्पेञ्ज० G1, G2, J, K. 7 ०पायति B. 8 वादीनां G1, G2, J. 9 ०यात० B, C. 10 ०सा G1, G2, J. 11 वापि G1, G2, J. 12 ०हीवने G1, G2, J. 13 अर्द्वेस० G1, G2, J. 14 Wanting in B. 15 एतान्येतान्येव C; एतानेताने G1; एतानेव G2; एतान्येतानेव J.

तदाहुः[1]—जनेच्छं[2] त्रिणिधनं यदनन्तराणि[3] निधनानीति ।
अथवैतानि विहृतान्[4]यनुपदमुपेयुः ।
तत्र निन्दा[5] यदनुपायान्निधनानामभिव्याहारः ।[6]
अथवा एतानि पृथक्स्तोत्रीयासूपेयुः[7] ।
5 तत्र[8] निन्दा यत् संप्रायाणां निधनानां विप्रयोगः ।
यथासमाम्नायमेवोपेयुः ।
अथापि यथासमाम्नायमेवैतत्[9] ।
स त्रिणिधनं भवतीति शाण्डिल्यायनः ।
वैत्ति[10]स्रो निधनमात्रा[11] भवन्तीति सर्वेषु पदेष्वभ्यासात् ।
10 सौमेधꣳ रात्रिषामेत्याचक्षते ।
कौत्स[12]मह्नीनादपनयति, सत्रं[13] चाहीनं च व्याविवर्तयिषन्[14] ।
तत्रैतदाष्टं[15]दꣳष्ट्रमृद्धिसꣳस्तावम् ।
'आ त्वा विशन्त्विन्दवः' इति । SV. 1. 197; 2. 1010; RV. 1. 15. 1.
15 एतास्वेताः सोम[16]वतीनाꣳ स्थाने सोमवत्य इति ।
समुद्रप्रवादा[17] आवत्यो[18]ऽन्तेऽभिरूपा इति ॥ १ ॥

बुभूषयज्ञ उत्तरः ।
अपि वा षडहा[19]प्तिमुपकृतः स्यात्, एतेषाꣳ स्तोमानामुपधानात् ।
तत्रोभे साम्नी बार्हतं तन्त्रं[20] बृहत्पृष्ठ[21]स्योपवती[22] प्रतिपत्[23] ।
20 [ कस्य[24] हेतोरिति ।
बुभूषयज्ञोऽयं भवति ।
अनवधारितकाम इति लामकायनः ।
तत्र सर्वाभिप्रायां प्रतिपदमन्विचिकीर्षीत् ।
अथापि षडहोऽयं संलक्षितः ।
25 सैषा षडहप्रतिपद् ] भवति ।

---

1 Wanting in B. 2 त्रैक्यं B; जनेच्छन् C. 3 ०दन्त० K. 4 वृह० B; हृता० G1, G2. 5 निन्दानुपायानां नि० B. 6 C repeats this line. 7 ०स्पेयुः G1, G2, J. 8 तन्निन्दा० B. 9 ०मेतत् C, G1, G2. 10 वक्ति ति० B. 11 ०नं न मात्रा G1, G2, J. 12 ०सं ही० B. 13 स्त्रिा निधनं न मान्यं सत्रं चा० G1; स्रो निधनं न मात्रा सत्रे चा० G2. 14 व्यावर्त० B, C. 15 ०ष्टा० B. 16 स्तोम० G1, G2. 17 ०दान् B. 18 भवत्यो० B; आवत्यान्ते० C; आवन्त्यो० K. 19 षडहा इति तदुपकृतस्यात् B. 20 तत्र B. 21 पृष्ठास्या० G1, G2, J, K. 22 ०वतीति C, G1, G2, J; ०वति K. 23 ०पक्षस्य G1, G2, J. 24 B omits कस्य ... पद (line 25)

अथाप्युभे स्थानवती अचिकीर्षीत् ।
तन्त्रेण बृहत्प्रतिपदा रथन्तरमिति ।
अथाप्येतामेवान्यवेदाः समामनन्ति ।
आन्धीगवादुत्तरमाथर्वणम् ।
5 षडहोऽयꣳ संलङ्घितः ।
तदेतत् प्रायश्चित्ति[1]साम ।
पशुकामयज्ञ उत्तरः ।
अपि[2] वा द्विरात्राप्तिमुपक्लृप्तिः स्यात्, एतेषाꣳ स्तोत्राणामुपधानात् ।
दशरात्राप्तिं वा, छन्दोमानामुपधानाद् ।
10 व्याख्यात[3]मौभयसाम्यम् ।
अनुपृष्ठं तन्त्रम्, द्वयान्याज्यानि, द्वयानि पृष्ठानि ।
द्वैविध्यात्[4] स खल्वाप्तोर्यामाणां पृष्ठानां वैश्वजितानि पृष्ठानि गर्भान्[5] करोति ।
एतानि नानात्वक्लृ[6]प्तानीति ।
15 अथाप्येवमास्तिरि[7]तरा दशरात्रस्येति ।
स[8] कस्य हेतोर्गर्भान्[9] करोतीति ।
एवꣳ हि शश्वद्बह्वृचा अधीयते—गर्भवन्ति पृष्ठानि भवन्ति, आप्तोर्यामस्य तानि, गर्भकारꣳ शꣳसेत्, पशवो वै पृष्ठानि, यद् गर्भवन्ति भवन्ति प्रजननेनैव पशूꣳत्समर्द्धयन्तीति ।
20 बृहद् वैराजगर्भं करोति ।
बार्हतं वै वैराजम् ।
तेनैव तदनुरूपगर्भं[10] वामदेव्यं महानाम्नीगर्भं क[11]रोतीति ।
आपो वै वा[12]मदेव्यम् ।
आ[13]पो महानाम्न्यः ।
25 तेनैव तदनुरूपगर्भं श्यैतं वैरूपगर्भं करोति ।
"पशवो वै श्यैतम् ।" PB. 7. 10. 13.
"पशवो[14] वैरूपम् ।" PB. 14. 9. 8.
तेनैव तदनुरूपगर्भं कालेयꣳ रैवतीगर्भं करोति ।
ऐडं वै कालेयम् ।

1 ०त्ति याम B, ०त्तिः स्या मा C; ०त्तिम G1, G2, J. 2 Wanting in G1, G2, J. 3 ०तः K. 4 ०विधात् G1, G2, J, K. 5 गर्भा C; गर्भा G1, G2, J. 6 नानाक्लृताप्तनीति B. 7 ०स्तित० G1, G2, J, K. 8 Wanting in G1, G2, K. 9 ०र्भानि G1, G2, J. 10 ०र G1, G2, J, K. 11 करोति C, G1, G2, J, K. 12 Wanting in G1, G2, J. 13 आपो G1, G2, J. 14 PB adds वै.

ऐडा रैवत्यः ।
तेनैव तदनुरूपगर्भम् ।
अथो[1] द्रवदिडं कालेयम् ।
के[2]स्तेडा रैवत्यः ।
5 "तस्मिन् मि[3]थुनादेव प्रजायते" इति । cp. PB. 16. 14. 6; 19. 11. 7.
"अपि वा सर्वाण्यावर्तीनि[4] वै[5]श्वजितैरावृत्तिभि[6]र्गर्भं भवन्ति[7] कुर्यात् ।
तत्र बृहत् सञ्चरते ।
तस्य वैरूपं विधृ[8]त्या इति ।" Ārṣ. K. V. 86b.
"तत्र[9] गर्भ[10]विधा[11]नमाहुः—मध्यमं पर्याय[12]संस्तोत्रीयं गर्भं कुर्यात्[13], प्रथमो-
10 त्तमौ मुख्यस्य, एवं गर्भोपपत्तिर्भवतीति ।" Ārṣ K. V. 86a.
"कथं धर्माः[14] ।
[कर्तव्या[15]] इत्येके ।
गर्भभूतानि भवन्त्य[16]नुभूतानि, अधर्मा गर्भो भवतीति ।
क[17]र्तव्या इत्याचार्याः ।" Ārṣ. K. V. 87a.
15 तत्र तान्येव व[18]चनानि यानि विश्वजिति, सुरूपं जराबोधीयस्य स्थाने, एतत् पशुसंस्तावमिति ।
उद्धरत्याथर्वणं द्विपदा ।
अत्र करिष्यन् भवति ।
तथैतत् सौह्[19]विषमभ्यस्तगीत्यतिरिक्त[20]मतिरिक्ते कल्पे[21] ॥ २ ॥

20 प्र[22]जातिकामयज्ञ उत्तरः ।
तत्र यो द्रव्यविकारः प्र[23]जातिकामयज्ञत्वात् स भवति ।
व्याख्याता उत्तरे ।
[24]एषै[25]ते एकस्तोमाः, एतान् कामानभ्युपक्रताः ।
यथैतद् ब्राह्मणम् ।

---

1 अथो B. 2 कस्रस्ते० B. 3 G1, G2, J, K add मिथुनं. 4 ०वर्तीति G1; ०वर्तीभि० G2; ०वर्तीमि J; ०वृत्तीनि K. 5 विश्व० G1, G2, J. 6 ०वृत्तिभि० K. 7 ०र्भं भवन्ति G1, G2, J. 8 ०विधृ० B. 9 Wanting in B. 10 G1, G2, J add विधानं. 11 ०भोधान० B. 12 सस्तोत्रीयं C, G1, G2, J, K. 13 कुर्वीत C. 14 C, G1, G2, J, K add इति. 15 Wanting in B. 16 ०नुभ्यभू० G1, G2, J; ०नूभ्यभू० K. 17 C, J repeat here कथं धर्मा … भवतीति. 18 विव० C, G1, G2, J. 19 सौविष्म० B. 20 ०क्तमतिरिक्ते G1, G2, J, K. 21 Cख, G1, G2, J, K write the first three sentences of the next section after कल्पे. 22 प्रजापतिकाम० Cख; प्रजापतियज्ञ G1, G2, J, K. 23 प्रजापति० G1, G2, J, K. 24 G1, G2, J, Cख, K begin the 3rd section from here. 25 ०षैकत G1, G2.

अथाप्येकस्तोमान्यहीनिकान्यहानि ।
सोऽन्ते न्यायमदिदर्शयिषीत् ।
तत् खलु बृहद्रथन्तरपृष्ठान् कुर्मः ।
राथंन्तरबार्हता ह्येते स्तोमा इति ।
5 ज्यौतिष्टोमं तन्त्रम् ।
ज्यौतिषा ह्येते स्तोमा इति ।
तत्रानुपृष्ठं द्रव्यागमः ।
षोडश्यां षोडशिनोऽनुब्राह्मणं वेति विचारयन्ति ।
किंस्तोमा अनुब्राह्मणं स्युरिति ।
10 एकविंशस्तोमा इति ।
एष एषां प्रकृतिस्तोमो भवति ।
अथाप्याहुः—अर्हस्तोममहः प्रथमोत्तमयोरन्वियाताम् ।
एकविंशं तु पञ्चदशस्य कुर्यात् ।
पञ्चदशं सप्तदशस्य ।
15 एवं तं स्तोमं संस्तुतोऽतिरात्रः सम्पद्यते ।
अथो यस्तस्याह्नो भवति, अहस्तोमं त्वेवान्विंयुरित्यनुब्राह्मणम् ।
अनुव्यूहमित्येतत् स्यात् ।
यो वा ह्यह्नः स्तोमः सं षोडशिनो[14] न्यायेन ।
यो वा हसीयानित्यह्नः स्तोमं चैनमनुयन्तं पश्यामः ।
20 "अथातो द्विरात्राः ।
तत्र ज्योतिष्टोमसर्वस्तोमौ समस्यति ।" cp. PB. 20. 11. 1.
मा विलोपे भूयान् विलोपो भूदिति च दाशरात्रिकाणामह्ना द्वे करोति ।
अथैतानि दशरात्रस्यान्त्यान्यहानि चतुर्थपष्ठे नवमदशमे इति ।
एतेषां द्रव्याण्यहीनान्तेषु चिकीर्षितानि ।
25 तत्रोत्तरत्र बहिष्पवमानम् ।

---

1 ॰त्वन्या॰ C. 2 ॰र्षं G1, G2. 3 तान् G1, G2, J, K. 4 रथ॰ C, G1, G2, J. 5 ज्योति॰ C, G1, G2, J. 6 ज्योति॰ C, J. 7 ॰शाः B, G1, G2, J, K. 8 अस्तोममह G1, G2, J, K. 9 ॰न्वितायामे॰ G1, G2, J, K. 10 तत॰ G1, G2, J. 11 ॰न्वी॰ B, G1, G2, J, K. 12 ॰णमिति C, G1, G2, J, K. 13 अतनु॰ B. 14 Wanting in G1, G2, J, K. 15 ॰शिन्यो B; ॰शिना G1, G2, J, K. 16 ॰याहि॰ C. 17 ॰ह्नः G1, G2, J, K. 18 चैवम॰ K. 19 ॰यत्त C. 20 ॰भूरिति G1, G2; भूरिती J, K. 21 ॰णां न C, G1, G2, J, K. 22 ॰न्ता॰ C, G1, G2, J, K. 23 ॰न्ते G1, G2. 24 ॰त्तत्र G1, G2, J, K.

अन्यत् प्रतिपदो नावमिकम् ॥ ३ ॥

अथैते हाविष्मतहाविष्कृते ।
हाविष्कृतं[1] पूर्वस्याह्न आर्भवचरꣳ स्थानापन्नं भवति ।
द्वितीयस्थानं च हाविष्मतम्, उत्तरस्य माध्यन्दिने सꣳहितं च ।
5 भागविलोपे भागसन्तानाय निकामयते ।
अपि चैवꣳ[2] सती नेदीयसी हाविष्मतहाविष्कृते भवत इति ।
जनुषैकर्चविहर्गणन्यायेन त्रैशोकवैखानसे जागतस्य भागस्यानुग्रहाय ।
अहीनान्तेष्वकांश्चिकीर्षिताः ।
सꣳरोधान्विह दीर्घतमसोर्कः[3] ।
10 विपर्ययेण[4]तरयोराप्तिः ।
स यदेतास्वेवं[5] स्वयोनिः[6] ।
अथाप्येतौ[7] धृतवत्यो दक्षितवत्योऽ[8]न्तेऽ[9]भिरूपा इति ।
ज्योतिष्टोमा[10]न्युक्थान्यहीनान्तेषु चिकीर्षितानि ।
एवं पथ्यावसानमिति ।
15 आयुषमुत्तरस्य द्वितीयं करोति ।
एते समायास्त्रिककुका इति ।
बृहत्पृष्ठं बार्हतं[11] तेन्त्रं[12] द्वितीयꣳ हि स्थानमापन्न[13]मिति ।
उद्धरत्यन्तलक्षणानि—त्रिणवत्रय[14]स्त्रिꣳशयोरन्वपायं[15]मुत्सेधनिषेधौ परि-
स्थानमिति ।
20 जराबोधीयमहीनेषु चिकीर्षितम् ।
एतच्छन्दोमसामेति ।
तद्यदुष्णिहि राथन्तरात् स्तोमांच्छुष्य[16]मविच्यावयिषीत् ।
उद्वꣳशीयं तैरश्च्यं वेति[17] विचारयन्ति ।
पूर्वस्याह्न उक्थान्त इत्यह्नो[18]द्वꣳशीयम् ।
25 उपक्रमणीयमहरिति तैरश्च्यम् ।
अषोडशिका रात्रिः स्तोमांशा[19]त्रेण[20], अषोडशिकौ[21] ह्येवायुर्भवतीति ।

---

1 ॰ष्मतं K. 2 ॰चौव॰ G1, G2, J, K. 3 ॰सोक्तः B. 4 अभिपर्यय॰ B; विपर्येतर॰ G1; विपर्ययेतरे॰ G2. 5 ॰स्वेवासु C, G1, G2, J, K. 6 स्वरसोनिः G1, G2, J; स्वरसोनिः K. 7 ॰तामधृ॰ B. 8 ॰तव्यो॰ B. 9 ॰ऽते॰ G1, G2, J, K. 10 ज्यौति॰ G1, G2. 11 ॰तत K. 12 तत्र B. 13 ॰पन्ना इति. 14 त्रय is wanting in G1, G2, J, K. 15 ॰पावायासु॰ B. 16 ॰ष्या॰ B; सोमांशुष्यसवि॰ G1; सोमांच्छुष्यसवि॰ G2, J; ॰मांशु॰ K. 17 विति J. 18 इत्यहो॰ G1, G2, J, इहो॰ K. 19 ॰मं शा॰ B. 20 ॰कात्रेण पो॰. 21 ॰कोऽग्रे॰ B, K.

" 'त्रिवृत्पञ्चदशोऽग्निष्टोमः।' PB. 20. 13. 1.
उत्तरस्य पूर्वं[1]मेकस्तोम[2]तामिवान्हो[3] दिदर्शयिष[4]न्नायुषो[5] प्रच्युतं[6] पञ्चदशं पूर्वस्मिन्नहन्यनुगृह्णाति।
तत्र यदेतत् स 'रूक्षोऽभवत्' इति। PB. 24. 13. 2.
5 कपिवनो[7] भार्य[8]जात्यश्चातूरात्राय[9] जामदग्न्ये[10] दिदीक्षे[11]।
ब्रह्मचारिणꣳ सम्पन्नकुलीनमपः प्रहृत्य।
तस्य त्रिवृतपञ्चदशमहरुपेतं बभूव।
अथेतरस्तमर्थꣳ साधयित्वा प्रत्याजगाम।
सामायमिमं[12]महर्यागं निशी[13]थमतेति।
10 आयुरतिरात्रमुपदधौ, ब्रह्मचारिणश्च परिहारेण यज्ञप्रत्यवहारेण[14] च[15] रूक्षो[16] बभूव।
यस्त्वेतौ दोषौ परिहरेन्न रूक्षः स्यादिति।" Caland PB. 20. 13. 4; cp. PB. 20. 13. 4, 5; ĀP. Ś. 22. 14. 20.
पूर्वेणैव[17] द्रव्यकल्पो व्याख्यातो व्याख्यातः॥ ४॥
15　　[18]द्वितीयः पटलः

अथातस्त्रिरात्राः।
तत्र वामदेव्यं तृतीये[19] पृष्ठे[20] करोति।
लोकविधा त्रिरात्र उपकृतः।
एतानि लोके[21]सामानीति।
20 तानि कुशलं यथाभक्ति निदधाति।
तन्त्रेषु विप्रतिपद्यन्ते।
आहीनिकतन्त्राणीति गौतमः।
तद्गायत्रीभिर्विजानीमः।
एकैवात्राहीनिकी भवति।
25 'अस्य प्रत्नाम्[22]' इति। SV. 2. 105; RV. 9. 54. 1.

---

1 पूर्वं एक० C, K. 2 ०स्तोना० G1, G2, J. 3 ०वान्यो B. 4 निर्दिशयि० K. 5 ०ष: B. 6 मच्यु G1, G2, J, K. 7 कषवनो B. 8 भाव० B. 9 ०श्वात्तरा० G1, G2, J; ०श्वतराय K. 10 ०न्यायय B. 11 ०क्षेद् B. 12 ०मिदहर्योगाद B. 13 शी० B. 14 Wanting in G1, G2, J, K. 15 चारू० B; च म्रक्षदिति G1, G2; च म्रूक्ष स्यादिति J, K. 16 G1, G2, J omit रूक्षो ... व. 17 पूर्वे J. 18 In B only. 19 द्वितीये B. 20 ०ष्ठ G1, G2, J; ०ष्ठं K. 21 लोके सा० C, G1, G2, J, K. 22 मत्ना B, C, G1, G2, J, K.

ता यत्करोति सहस्रवती सहस्रवत्तदभिरूपेति ।
एकाहिकानीति धानञ्जय्यः ।
तद्गायत्रीभिरेव जानीमः ।
एकैवात्राहीनिकी भवति ।
5 "प्र सोमासो विपश्चितः" इति । SV. 1. 478; 2. 114; RV. 9. 33. 1; PB. 11. 3. 1.
यत्[2] करोति[3] प्रवत्युपक्रमेऽभिरूपेति ।
अहरहरेवाहीनैकाहाभ्यां[4] वर्तेत[5] इति शाण्डिल्यायनः ।
एवं युक्ता एता गायत्र्यो भवन्ति[6] ।
10 अथ खल्वत्र भागविपर्ययो भवति ।
लोकविधां त्रिरात्र उपकृतः ।
तं यथाभक्त्यचिकीर्षीत्[7] ।
ते एते परेऽहनि भागविपर्ययाद्[8] द्व्यसमासेन वर्तेते[10] ।
*द्वितीयेऽहनि[11] स्थानस्थानि[12] द्वैतीयिकानि[13], भागान्वितानि तार्तीयिकानि[14] ।*
15 एतदेव विपरीतम् ।
तृतीये[15] खल्वत्र द्व्यान्यक्षररूपाणि क्रियन्ते ।
प्रजापतेश्च वागक्षराण्यक्षराक्षराणि[16] च ।
आज्यादिषु प्रजापतेर्वागक्षराणि, यथोपलम्भमहस्स्वक्षराक्षराणि[17] ।
एकाक्षरणिधनं यौधाजयम्[18] ।
20 एष आचार्यसमयः ।
अथाप्याह—"यदार्क्षराणि प्रथममहर्भजन्त" इति । PB. 21. 5. 4.
व्याख्याता अर्काः, तथाज्यदोहानि ।" cp. PB. 21. 5. 5.
पूर्वावर्कौ व्यस्यति[19] ।
*अक्षरणिधनं प्रथमेऽहनि विकीर्षन्नाज्यदोहानां[20] प्रथमं तृतीये ।*
25 एवमिव ब्राह्मणं भवति—अथाप्येषामेतत् त्रिणिधनं तृतीयेऽभिरूपम् ।

---

1 सहस्रदत्तावभि० B; सहवत्तावभि० G1, G2, J, K. 2 C, G1, G2, J add तां. 3 सहस्रवती सहत्तावभि० G1, G2; सहस्रवती स( ०हस्र K )भत्तावभि० J, K. 4 अहरेकाहीनैकाहाभ्यां G1, G2, J; अहरहरेकाहीनैका० K. 5 पर्वत G1, G2, J, K. 6 ०न्तीति C, G1, G2, J, K. 7 ०र्षन् B. 8 ०या B, G1, G2, J, K. 9 द्वादशमासे G1, G2, J. 10 वर्तते K. 11 ०हस्था C, G1, G2, J, K. 12 स्थानिस्था० G1, G2, J, K. 13 द्वि० K. 14 तार्तीयानि G1, G3, J, K. 15 ०ये मथ ख० K. 16 वागक्षराक्षराणि C; वागक्षरा G1; वागक्षराक्षरा G2, K. 17 ०महःस्वक्षण्येका० G1, G2; ०महस्वक्षण्येका० J; ०महःस्वक्षरा अक्षण्येक० K. 18 ०क्षराणि C. 19 ०स्य स्यक्ष० C. 20 ०कीर्षि० J, K.

अनुष्टुभि[1] प्रथमस्य करोति ।
अत्रैव सन्तानार्थानि भवन्ति[2] ।
सन्तानार्थ[3]मिदं भवति ।
द्व्यक्षरणिधनत्वादनुच्छन्दसम् ।
5 इतरयोरैडमन्त्यं करोति ।
इडानुग्रहार्थं[4] बृहतीं[5] वा स्वेन सामान्ते[6]नापिपादयिषेत्[7] ॥ ५ ॥
उपर्वती[8] द्वितीयस्य प्रतिपन्नवमात्[9] स्तोमान्विता[10] ।
'कया ते अग्ने अङ्गिरः[11]' इति[12] होतुराज्यम् । SV. 2. 899; RV. 8. 84. 4.
केति तृतीयमिति हि भवति[13] ।
10 अथाप्याह[14]—"यत् सामा स्तोमो भवति तदाज्येषु । निराह" इति । PB. 11. 2. 1, 2.
तौ[15] एतौः[16] कवंत्यो[17] यथा वामदेव्यस्यर्चौ[18] दाशरात्रिकाण्युत्तराणि सन्तनीति[19] ।
स्वयोनीति[20] होतृकपृष्ठान्येतानि ।
छन्दोमत्र्यहे प्रायश्चित्तार्थे[21] गायत्रपार्श्वं[22] मैत्रावरुणसाम ।
15 एतद् वामदेव्यं[23]सदृशम् ।
तत् खलु बृहतीषु करोति[24] त्रिस्थानां[25] बृहतीं पृष्ठेषु चिकीर्षन् ।
अथाप्यस्मिन्नक्ष[26]राक्षरं भवति ।
ककारपकारादिरकारः सन्तनि ब्रह्मसाम ।
'अस्तावि मन्म पूर्व्यम्' इति । SV. 2. 1027; RV. 8. 52. 9.
20 एता ब्रह्मप्रवादा इति ।
संकृत्यं[27]च्छावाकसाम नवमाद् भागान्वितम् ।
अथ खल्वत्रा[28]जामि भवति ।
लोकविधां त्रिरात्र उपकृतः[29] ।
सम्भिन्नमाभ्यां लोकाभ्यामन्तरिक्षमिति ।

1 अनु प्र० C, K. 2 C omits सन्ताना० भवन्ति. 3 ०र्थानिदं G1, G2, J, K. 4 ०म्रहो C; ०म्रहोय G1, G2, J, K 5 जगतीं C, G1, G2, J, K. 6 ०न्ते तेना० G1, G2, J. 7 ०षत् B. 8 उपपदी B. 9 ०न्नस्य च पाद् G1, G2; ०न्नस्य वमाद् K. 10 भागान्विता C, G1, G2, J, K. 11 ०रसः C, G1, G2, J. 12 Wanting in G1, G2. 13 ०तीति C, G1, G2, J, K. 14 अथा प्रा० G1, G2, J, K. 15 Wanting in G1, G2, J. 16 ताः G1, G2, J, K. 17 आपत्यो B. 18 ०व्यर्चो C, G1, G2, J. 19 ०नोति B 20 ऽस्वायानीति G1, G2, J. 21 ०त्रार्थे C 22 ०पार्श्व G1, G2, J. 23 ०व्यं स० B. 24 करोतीति B. 25 त्रिस्थानां C. 26 ०न्नवाक्ष० C. 27 सन्तन्व्या० C. 28 ०त्र जा० C, G2, J, खलुत्र० G1. 29 उपा० G1, G2, J.

पाञ्चमिकीं ककुभं करोति ।
तस्यां[1]मक्षराक्षरं भवति ।
ककारषकारादिरकारः पिपीलिकामध्यां करोति ।
घागुक्तोऽयं त्रिरात्रः ।
5 तत्रोभावाकारा[2]वनुष्टुभामचिकीर्षीत् ।
नावमिकीरुत्तराः ।
अक्षरसमासो हि तार्तीयिकेषु[3] ।
तासां मध्यमामुद्धरति ।
दशरात्रलिङ्गेति ।
10 तत्रैतां करोति ।
'तं सखायः पुरूरुचम्' इति । SV. 2. 1030; RV. 9. 18. 12.
एषा सखिमती यथा वामदेवस्यर्चः ।
ता यदावर्तयति परिवत्या प्रक्रमं परिजिहीर्षन् ।
नानाग्निष्टोमसामानि ।
15 नानात्वावृत्तार्थो[4] नानाछन्दः ।
स्वा[5]वृत्तेष्वेवं भूयो[6] नानात्वमिति ।
स यदिहानुष्टुभं[7] करोति ।
बृहतीः कृत्वानुष्टुभा वेलेति[8] ।
तत्रैतद् विशोविशीयं स्वयोन्यापन्नं पुरस्तादेतत् स्थानम् ।
20 वा[9]क्प्रवादोऽत्र भवति ।
भागान्वितान्युक्थानि ।
'होता देवो अमर्त्यः' इति । SV. 2. 827; RV. 3. 27. 7; 8. 19. 24.
तृतीयस्य होतुराज्यम्[10], हो इति तृतीयमिति हि भवतीति ।
गो[11]षूक्तं प्रायश्चित्तिसाम ।
25 एतस्मिन्नक्षराक्षरं भवति ।
रेफादिरकारः सतोबृहतीं करोति ।
त्रिपदा त्रिरात्रेऽभिरूपेति ।
सत्रासाहीयं मैत्रावरुणसाम ।
एतद् वामदेव्यसदृशम् ।

---

1 एतस्यामक्षरं C, J, K; एतस्यमक्षरं G1, G2. 2 °राऽनु° C; °रानु° G1, G2, J, K. 3 °कीषु C, G1, G2, J, K. 4 नानात्वार्थो C, K. 5 स्वावृ° B. 6 °भूतो B. 7 °भः C, G1, G2, J, K. 8 चो भवति Ck. 9 वार्क° B. 10 G1, G2, J repeat it. 11 गौ° B, K.

पुरस्तादेतत् स्तोभं बहिःस्वारम् ।
यथा वामदेव्यम् ।
वारवन्तीयमग्निष्टोमसाम ।
एतद् गायत्रीसामापन्नं पुरस्तादेतत् स्थानम् ।
5 वाक्प्रवादोऽत्रे[2] भवति ।
वाग्युक्तोऽयं[3] त्रिरात्रैः[4] ।
अपि वानुष्टुभोपपत्त्यां[5] वाक्प्रवादेनानुग्रहो भविष्यतीति ।
अक्षरविक्रमेऽयं[6] त्रिरात्रः ।
अपि वानुष्टुभोपपत्त्याक्षरप्रवादेनानुग्रहो भविष्यतीति ।
10 विद्वानविद्वानिति तु भवति[7] ।
नानासाधुरयं त्रिरात्रः ।
तत्र नानर्त्विजोऽचिकीर्षेत्[8] ।
कथमविद्वानृत्विक् स्यादिति त्वेवैतत् सदस्यांनेव प्रतिग्राहकान् कुरुत इति ॥ ६ ॥

15 राजयज्ञ उत्तरः ।
तस्य यदेवरविधोऽह्यर्योगः ।
एतान्येंन्ताहानि, अन्तो हि राजेति ।
महानाम्नीर्मध्यमस्याह्नः पृष्ठं करोति ।
सर्वच्छन्दस्यास्ते[12] ।
20 सर्वपशूनामालम्भो[13] भविष्यतीति ।
अथाप्येता वज्रोक्ता राजयज्ञेऽभिरूपाः, वज्री हि राजेति ।
कथं धर्मा इति ।
कर्तव्या इत्येके[14] ।
[15]ते चैव करणवर्णा ये वज्रे ।
25 अपि चेह स्वस्थानतराः पृष्ठं च हि भवन्ति ।
अहीने च ।
अथापि यद्विदमिहाशान्तं क्रियते ।
सर्वपशूनामालम्भोऽव्यभिमेर्थिकाः[16] पृष्ठविलोपः ।

---

1 अपु० C, उपुर G1, G2, K, उत्पुर J. 2 ०दो G1, G2, J. 3 ०क्ते० G1, G2. 4 ०त्रे G1, G2, J. 5 ०पयत्या B; पथस्या G1, G2, J, K. 6 ०मो० B. 7 ०न्ति C. 8 ०र्षेत् B. 9 ०स्था० B. 10 ०भ्यन्तरानि G1, G2; ०न्यन्तो० K. 11 ०म्नि G1, G2, J, K. 12 ०न्दस्स्यासु C, ०न्दःस्यासु G1, G2, J; ०न्दस्यासु K 13 C adds न. 14 ०त्येते C. 15 C, G1, G2, J, K add तत्र. 16 ०नेधिकाः B; ०मेधिकां G1, G2; ०मैधिकां J.

तत्रापः शान्त्यर्थाः[1], ते क्रियमाणा बृहद्रथन्तरयोर्धर्मान्[2] कारयेयुरिति ।
अथापि संयुक्तधर्मा इति ।
अथ बृहद्रथन्तरयोर्धर्मान्नि कुर्युः ।
[ महानाम्नीबलां[3]तु नूनम् । ][4]
5 महानाम्नीनां[5] धर्माः क्रियेरन्निति ।
अकर्तव्या[6] इत्यपरम् ।
तत्रै[7] ते[8] चैवाकरणवर्णा ये चैत्रे[9] ।
अपि च यः स्वाध्यायधर्मान्[10] प्रतीयात्[11] कृत्स्नान् प्रत्येतुमर्हतीति[12] ।
तेऽवेलायां[13] नोर्ध्वं[14] माध्यन्दिनीन् महानाम्नीभिः स्तुवीरन् ।
10 एका[15] वा द्वौ वा सम्प्रगायेतां नेतरे[16] शृणुयुरिति ।
एतान्येवमकुर्वतो[17] निर्वचन[18]स्वाध्यायधर्मः ।
अथापि यो बृहद्रथन्तरयोर्महानाम्नीकारितान् धर्मान् मन्येत भूयेभ्या[19]-
ल्पीयसेऽनुसंहरेत् प्रत्यक्षे च परोक्षायां[20]नुचर्य्यं गमयेदिति ।
अतस्तत्पापीयो[21] बृहद्[22]रथन्तरधर्मान्[23]कृत्वा महानाम्नीनां धर्मान् कर्त्तव्यान्
15 मन्येत ।
समानो[24]त्पादाना[25]ं समानविधानानां सतां[26] य एकान्[27] कुर्यात् ।
एकान् न किं सोऽत ऊर्ध्वं नै[28] व्यांहन्यात्[29] ।
व्याख्याता अनुष्टुभः प्रतिपदश्चतुष्प्रोमे[30] ।
ताभिः प्रच्युं[31]तामुपवतीं द्वितीयेऽहनि प्रतिपदं करोति ।
20 ऋचिमन्तं प्रथमात् प्रच्युतं तृतीयेऽहन्यनुगृह्णाति ।
वामदेव्यं महानाम्नीभिः प्रच्युतं स्वे स्थानेऽनुगृह्णाति ।
पार्थुरश्मं ब्रह्म[32]साम ।
पङ्क्तिप्रतिप्रयोजना महानाम्न्यः ।

---

1 ०र्थो G1, G2, J, K. 2 ०र्दमर्नि G1, G2; र्दमोथा J. 3 ०लानु C, G1, G2, J, K. 4 Wanting in B. 5 ०म्नीनो G1, G2, J. 6 ०व्य G1, G2 7 Wanting in G1, G2, J. 8 Wanting in B. 9 चे G1, G2; चे J, K. 10 ०ध्यायमनिवायाकृ० G1; ०ध्यायधर्मा तवायाकृ० G2; ०ध्यायधर्मातवयाकृ० J, K. 11 प्रतिपदं B. 12 ०र्हति B. 13 ते वे० C. 14 नोर्धस्तन्मा० C; नोस्ते मध्य० G1, G2, J, K 15 एका B. 16 इतरे G1; रेतरे G2, J. 17 ०र्वन्तो C, G1, G2, J, K. 18 ०नः स्वा० G1, G2, J, K. 19 भूयसश्च० B. 20 या is wanting in G1, G2, J; ०क्षया० K. 21 C, G1, G2, J add यो. 22 बृहद् is wanting in G1, G2. 23 ०नु कृत्वा B 24 सामान्यो० G1, G2, J, K. 25 ०त्पादनं० G1, G2; त्पदानां० J. 26 सतान् G1, G2, J. 27 एतान् B. 28 ०नै० C. 29 न्याह C, G1, G2, J, K. 30 ०मैना० C, G1, G2, J. 31 प्रस्तुता० G1, J. 32 बृहत्साम B.

एतत् पाङ्क्तं त्रसाम, अथकारणिधनम्।
ताभ्यां प्रच्युते सन्तनिनी माध्यन्दिनेऽनुगृह्णाति।
आशीःसामनी[1] मां[2] प्रत्योपैतामिति[3] ॥ ७ ॥

अथैतस्य एतन्तकस्य प्रथमेऽहनि वैष्णवीष्वनुष्टुप्सु पावमानीषु[4] बहिष्प-
5　　वमानं[5] कल्पयेदित्येक आहुः।
एतत् प्रकृतौ दृष्टं भवतीति[6]।
नैतदयुंक्षु[7] स्तोमेषूपपद्यत इत्यपरम्।
एतस्मिन्नेव बहिष्पवमाने गायत्रीः पावमानीरावपेत्[8]।
एतद्धि हार्विष्कृतं[9] भवतीति[10]।
10 चतुष्टोमप्रकारितास्ता भवन्तीत्यपरम्।
गायत्रीष्वेव कल्पयेदिति।
अथ खल्वाह—एते एव पूर्वे अहनी इति।
तत्रैके पातन्तके प्रतियन्ति।
एतं विधाय प्रदेशो भवतीति।
15 प्रकृत्यपश्रया विकारा भवन्तीत्यपरम्।
प्राकृतस्यैवा[11]श्वमेधस्य प्रतीयादिति।
अथापि ते नानास्तोमाः।
एकस्तोमोऽयं[12] भवति।
तत्र स्वतन्त्रा एकाहाः स्युरित्येके।
20 बहुधैका[13]हानां स्वातन्त्र्यं दृश्यते।
यथा—आयुष्कामे षड्रात्रै[14]र्नवरात्रयोरिति।
त्रि[15]रात्रतन्त्रा इत्यपरम्।
एवं च तन्त्राविलोपः। [1]cp. LŚ. 9. 11. 13.
अपि चैषोऽहीनन्याय इति।
25 अषोडशिके[16] गोआयुषी इत्यपरम्।
एवं दृष्टे[17] च, अपि चैवं प्रदेशो भवतीति।
अथैष वैदत्रिरात्रैः[18]।

---

1 ०सामनि B, ०सामानी C. 2 वा G1, G2, J, K 3 प्रत्योयोन्दता० B, प्रत्येपाता० C. 4 ०नीभिर्बर्हिषु B. 5 ०मानिनं G1, G2, J. 6 ०वती B. 7 ०दष्टुषु C, ०दयुक्षुः G1, G2, J. 8 ०दिशा G1, G2, J, K 9 हार्षिकृत G1, G2, J. 10 ०वति K. 11 ०स्यैवने प्र० G1, G2, J, ०स्यैवाने० K 12 ०मो यत् भ० C, G1, G2 J; ०मो यद् भ० K. 13 बहुभ्नेका० B. 14 ०त्रे न० C, G1, G2, J, K. 15 त्रि is wanting in G1, G2, J, K. 16 ०को B. 17 मद्दे B. 18 ०स्य त्रि० G1, G2, J

तस्य त्रिवृत्स्तोमाः स्युः ।
षोडशिन उत्तमस्यातिरात्रस्य षोडशं प्रथम[1] रात्रिपाम ।
एवं तावत् स्तोत्रीयो यथा त्रिरात्रः ।
नाना षोडशसामानि नानात्वार्थः ।
5 नानदं प्रथमः ।
उद्व[2]शीयं द्वितीयः ।
एतदानुष्टुभ[3] हरिवद्योनि, यथा गौरीवितम् ।
तस्य स्थाने तैरश्च्यम् ।
एतत् पूर्वाभ्या[4] सप्रायं न्याय्य उत्तमे षोडशिं ।
10 अथैत उत्तर एतान् कामाग्नभ्युपकृताः ।
यथैतद् ब्राह्मणम् ।
स्तोमकारित आवापः ।
अन्तर्वसावप्रत्ययवरूढानि उत्तमस्याह्न उक्थानि ।
लोकविधां त्रिरात्र उपकृतो रोहोपकारः ।
15 अथाप्येवमभ्याहृत[5] सवनमिति ।
न्यायकृत उत्तरो न्यायकृत उत्तरः ॥ ८ ॥

तृतीयः पटलः

"अथैष चतुर्वीरो बृहद्रथन्तरपृष्ठ एव ।
न हि षाडहिकान्यनुभवन्ति ।
20 नान्यो व्यलुलुप्सीत् ।" Ārs. K. V. 74 b.
ते यज्ञानाछन्दस्सु ब्राह्मणेनैव तद् व्याख्यातम् ।
कानि तन्त्राणीति ।
चतुरहतन्त्राणीति गौतमः ।
तद् विजानीमः ।
25 चतुर्थेऽहनि चतुर्थप्रतिपदमादिश्यैकाहतन्त्राद्यान्निमुपजिगमिषन्नस्य प्रज्ञां करोतीति ।

त्रीण्यहीनिकानि ।
एकमैकाहिकमिति धानञ्जय्यः ।
एवं एवैणाहीनस्यादर्नम् ।

1 स्तोमो C; ०मा G1, G2, J, K. 2 ०शि० K. 3 नात्वा० G1, G2, J, K. 4 न्याम्यत B. 5 ०यस्य B. 6 एतां C. 7 उच्छ्रो० B. 8 In B only. 9 नो B, K; नानो G1, G2, J. 10 Wanting in G1, G2, J. 11 ०ष्ठैका० C, G1, G2, J, K. 12 ०मेकैका० G1, G2, J. 13 प्रवणा० G1, G2, J. 14 ०दनन्तम् B.

एकाहतन्त्रा[1]द् रात्रेरुपायः ।
स यदे[2]तदनन्ततन्त्रतरं स्तोमकारित आवापः ।
उद्धरति जनुपैकर्चौ स्तोमकल्पार्थः ।
तत्र ज्योतिष्टोमौ[3] करोति ।
5 तयोः स्थाने नाना[4]पवमानिकेभ्यो नानात्वार्थः ।
अथ यत्रा[5]यमर्थो भवति साप्तमिकीं तत्र ककुभं करोतीति[6] ।
असञ्चाराय तत्र खलु पद[7]स्तोभान् करोति ।
चतुरोऽयं[8] वीरानुपकृतः ।
त एते चत्वारः समानयोनयः समानार्षेयाः पुन्नामधेया गणेडा
10 गणनिधनाः ।
अपि वा चातुर्वि[9]ध्यादेव क्रियेरन् ।
तांस्तु यदेवं प्रयुं[10]क्ते, एवमि[11]डान्तो रोहः ।
अपि चैवं दाशरात्रि[12]कोऽवसाने[13] भवतीति ।
तान् खल्वन्त्यान् करोति ।
15 अत्रैषां स्वच्छ[14]न्द इति ।
तत्[15] कुशलं[16] यन्नित्यासु ।
'धर्त्ता[17] दिवः' इति । SV. 1. 558; 2. 578; RV. 9. 76. 1; PB. 14. 9. 4.
उत्तम एतासु स्वयोनिः ।
20 अथाप्येता अन्तलक्षणैः सम्पन्ना इति ।
व्याख्याता अर्काः ।
तेषां [18]तदेवानुपूर्व्यं यत् त्रिरात्रे गोपूं[19]क्तं प्रायश्चित्तिसामै[20] ।
पदस्तोभव[21]र्धितमर्कं द्विपदास्वनुगृह्णाति ।
तेन प्रच्युतं वारवन्तीयमुष्णिह्यन्तसाम मा प्रच्योष्टेति विपरिहरति ।
25 आनुष्टुभेऽजाम्यर्थः ।
एतेनैवोत्तरे व्याख्याताः ।
उद्धरति पदस्तोभान् ।
न ह्येते चतुरो वीरानुपाकृताः ।

1 ०न्त्राया त्रे० G1, G2, J. 2 यदेतदेतत्तन्त्रान्तरं C, यदेतदन्तन्त्रतरं G1. G2. J, K. 3 ०ष्टौ C, G1, G2. 4 नावमिक्यौ C, G1, G2, J, K. 5 यत्र षडहो० C, G1, G2, J, K. 6 ०रोति C, G1, G2, J, K. 7 पाद० B 8 B adds चतुरो. 9 ०र्विद्ध्या० K. 10 प्रयन्ना B. 11 ०डातो C, G1, G2, J, K. 12 ०त्रिकौव० G1, G2, J, K. 13 ०सानो C. 14 स्वं छन्द C, स्वंद G1, G2, J. 15 तान् C, G1, G2, J, K. 16 ०लत्वं B 17 धर्ता B. 18 यनदे० G1, G2, J यत्तदे० K. 19 गौ० K. 20 ०सामाः G1, G2, J, K 21 ०व्यप्म० C G1 G2 J,K

तत्र कुशलं यन्नित्यादि[1]पदस्तोभापायादर्कः स्वꣳ स्थानꣳ समापद्यते ।
तस्यानुसमाप्ति[2]ꣳ श्रुध्यवारवन्तीये समाप[3]द्येते ।
अतो यो द्रव्यविकारः स्तोमै[4]कारितः स भवति ॥ ९ ॥
अथ खल्वाह—"वसिष्ठस्य जनित्रे भवतः" इति । PB. 19. 3. 8; 21.
5 11. 3; LŚ. 9. 12. 8.
कस्येदं ब्राह्मणꣳ स्या[5]दिति ।
बृहद्रथन्तर[योर्[6]विप्र]योगस्येत्याहुः, एते[7] हि विश्वोवसीयसी आजनित्रे भवत इति ।
अपि वा रथन्तरस्यैव द्वियोगस्यैतद्धि वासिष्ठमिति ।
10 अपि वा रथन्तर[8]स्यैव भवतश्च वासिष्ठस्य, ए[9]ते वासिष्ठे भवत इति ।
जनित्रे ए[10]वानुकल्पयेदिति कौत्सः[11] ।
जनित्रे भवत इति सति किमन्यदनुकल्पनात् ।
न त्वेवानुकल्पयेत् ।
न ह्येते आनवकाश्याननुकल्पयतीति ।
15 एतेषां[12]मेव विचारणामेकस्यैतद् ब्राह्मणꣳ स्यात् ।
ए[13]कस्तोमतामिवा[14]ह्नां दिदर्शयिषन्नुत्तमे भागस्तोमान् करोति, एते प्रा[15]प्तिस्थाना इति ।
पञ्चरात्रस्य चतूरात्रेणैव पृष्ठवादो व्याख्यातः ।
ते खलु स्वा[16]सु करोति ।
20 न ह्ययं चतुरो वीसं[17]नुपकृतः ।
अथापि नानाभागश्चतूरात्रः ।
अ[18]थेह समानभागे चतुर्थपञ्चम इति ।
कानि तन्त्राणीति ।
पञ्चा[19]हतन्त्रा[20]णीति गौतमः ।
25 तच्चतूरात्रेणैव व्याख्यातम् ।
चत्वार्याह्नीनिकानि ।

---

1 ०वि० G1, G2, J, K. 2 ०मापत्ति० G1, G2, J, K. 3 ०पते B, G1. 4 स्तोभ० C; ०स्तोमविकारः K. 5 J omits स्यादिति ... वा रथन्तर ( line 10 ). 6 योरविप्र is wanting in B. 7 ०ऐके B. 8 ०स्य इवत० C; ०स्यये इवत० G1, G2, J; ०स्य चेहवत० K. 9 एके B. 10 वा० B. 11 ०त्सौ G1, G2, J. 12 ०र्या त्वेव C, G1, G2, J, K. 13 एवस्तो० G1, G2. 14 ०वह्नां G1, G2, J. 15 प्राप्त० C, G1, G2, J, K. 16 यः सवनसाधु B. 17 ०नुकृतः C. 18 येह G1, G2, J, K. 19 ०श्चमाह० K. 20 G1, G2, J add तं after ०ह.

अथ[1] प्रायणीयोदयनीययोर[2]तिरात्रयोरादिशति ।
एकत्र षोडशिनं नैकत्र[3] ।
तत्र[4] कथं[5] स्यात् षोडशीति ।
यथा विराट् सम्पदं[5] सम्पत्स्यमानां[6] मन्येत[7], तथा कल्पं कुर्वीत
5 यथा[8] संवत्सरसम्मितासु ।
अपि वा यत्र भागस्तोमानां संविभागः सिध्येत् ।
[ द्वादशाहस्य[9] च गवामयनस्य ] स[10] विराट्सम्पदं षोडश्युपकृतः ।
अथानुपपद्यमानायां प्र[11]कृतौ[12] निर्णीय यथा मन्येत तथा संशयेषु प्रतिपादयेत् ।
10 तेषां[13] यानि[14] रात्रिसत्रन्यायेन वर्तन्ते[15] षोडशिमन्तौ तत्र, यथा द्वादशाहे[16] ।
अथ यत्र रोहप्रत्यवरोहौ स[17]त्रमुपकृतमषोडशिकौ तत्र, यथा गवामयने ।
यत्रानुमध्यं षोड[18]शी दृश्येता[19]षोडशिकौ तत्र[20] ।
यत्रो[21] न दृश्येत षोडशिमन्तौ तत्र स[22]त्रकामस्य ।
अथा[23]पि वा चतुष्टोमेष्वषोडशिकौ सर्वस्तोमेषु षोडशिमन्ताविति
15 [ षोडशि[24]मन्ताविति ] ॥ ५ ॥

अष्टमः[25] पटलः

अथातः सांवत्सरिकाणि ।
तेषां यद् गवामयनेन सामेति व्याख्यातम् ।
तद्य[26]दुपवदति व्यावृत्त्य[27]र्थं[28] वा तत् ।
20 अपि वा[29] ब्राह्मणेनैव कारणं वदति ।
तत्रादित्यानामयनं[30]मुद्भिद्बलभिदौ मासासम्पूरणाय करोति ।
तत्रैक इन्द्रक्र[31]तावुत्सेधनिषेधौ कुर्वन्ति ।
एष औत्तर[32]पाक्षिक इति ।

---

1 अथा G1, G2, J. 2 °णीयो° G1, G2, J. 3 चै° G1, G2; से° J. 4 तद् C; wanting in G1, G2, J. 5 G1, G2 omit सम्पदं. 6 °नान् B; °माना G1, G2, °मा J. 7 °न्येत C. 8 C, G1, G2, J, K omit यथा ... सिध्येत्. 9 B omits द्वादशाहस्य ... °नस्य. 10 Wanting in C, G1, G2, J, K. 11 प्रा° G1, G2. 12 °तो J. 13 येषां° G1, G2, J. 14 वा B. 15 °न्ते B. 16 B adds च. 17 सत्रिरुपकृतापोडशिनस्त° B. 18 षोडशी दृश्येता is wanting in C, J. 19 °तं षो° G1; °तां षो° G2, K. 20 यत्र C. 21 यथा B. 22 तत्र कात्स्न्यांय C; सत्रकात्स्न्यांय G1, G2, J. 23 अपि C, G1, G2, J. 24 Wanting in B. 25 In B only. 26 तदप° G1, G2, J. 27 व्यावृत्त्यर्थं ... वदति। तं is wanting in G1; वाहृप्य° G2, J. 28 °र्थे C. 29 Wanting in C, G2, J, K. 30 °न उ° C, G1, G2, J, K. 31 °मातु° B. 32 °प° B, G1, G2, J, K.

तत्र निन्दा यत् षट् प्रगाथा भवन्ति, अष्टौ प्रागाथिकानीति ।
यथासमाम्नायं त्वेवैवं पक्षयोः समाधिरिति ।
पञ्चदशत्रिवृद्भ्यामुपहिते गोआयुषी, ते पञ्चदशत्रिवृद्भ्यां प्राचिकमयि-
षीत् ।
5 छन्दोमस्तोमं दशरात्रे करोति, पाङ्क्ताश्छन्दोमा इति ।
तस्यान्ते चतुर्विंशे सन्निपततः ।
तत्र पञ्चविंशं करोति ।
नानात्वार्थः स उ चतुर्विंश एव भवति ।
चतुर्विंशो ह्येवैष एकाह्नि प्रस्तुत इत्यालोभाद् बृहद्रथन्तरे पृष्ठे ।
10 अथापि स्तोममात्रेण ।
अथाप्येवं तावन्तः पृष्ठोपाया यथा गवामयने ।
समूहति बार्हद्रथन्तरपृष्ठ्यात्, उद्धरति षोडशिनं चतुर्थात् ।
विराजमन्वपाय स्वराजोपेयुः ।
स्तोमस्य वा लोभात् ।
15 अथापि यद्ध हैनमेकविंशमकरिष्यदुपैष्यच्छान्दोमात् ।
यदि छन्दोममेकविंशयात् ।
न चैषं सैकविंशे कृतावनेकविंशस्तथेह भवतीति ।
अथाप्येवं तावन्तः षोडश्युपाया यथा गवामयने ।
अथाप्येवं पञ्चदशसम्पद् दशरात्रस्य सिध्यति ।
20 षट्स्तोत्रीयाः पञ्चदशमतिरिच्यन्ते ।
त्रीण्यत्र सन्ततीन्येकप्रस्तावानि तेभ्यः षट् प्रस्तावा लुप्यन्ते ।
एवमेषा पञ्चदशसम्पत् सिध्यतीति ॥ ६ ॥
दशमस्य चतुस्त्रिंशम् [ एकेऽग्निष्टोमसाम कुर्वते छन्दोमतायै ।
चतुर्विंशमेके ।
25 एकाहस्तोमो भवतीति ।
त्रयस्त्रिंशं त्वेव स्यात् ।
क्रियमाणे ह्येवैतस्मिन् पुरा छन्दोमस्तोमम् । ]

---

1 G1, G2 omit तत्र. 2 °षट् B. 3 °मैषीद् C; °मिषिषी G1, G2, J, K. 4 षड्क्ता छ° C, G1, G2, J, K. 5 °पा° B, G1, G2, J, K. 6 °त्वर्थः G1, G2, J, K. 7 येकाह्नि C; एकाहि G1, G2, J; एकाहे K. 8 °पृष्ठ्यो C. 9 °जा° C, J, K. 10 अन्यथा° C, G1, G2, J, K. 11 विंशं°...°नेक (line 17) is wanting in G1, G2, J. 12 °दुपविष्यच्छन्दोम्यात् C; °दुपविष्यच्छन्दोमयात् K. 13 चैकमेक° C. 14 तावद् तत् B. 15 °सम्पद° C. 16 °मि° G1, G2, J. 17 एकेऽग्नि°...°स्तोमम् (line 27) is wanting in B. 18 °तायै C, J.

एतदहर्भवतीति, यथा भूयस्येन ।
अथाप्याह—चत्वारश्छन्दोमा इति ।
एष एव संशय एकस्तोमेषु[3] ।
सर्व एव द्वादशाहो विकृतः स्यादित्येके ।
5 द्वादशाहे च श्रूयमाणे किमर्थोऽवयवं प्रतीयादिति ।
कृतप्रमाणाः संशया भवन्तीत्यपरम् ।
ते पश्यामोऽन्यावतिरात्रौ कृत्वाह—अभिजिद् द्वादशाहो विश्वजिद् द्वादशाह इति ।
अथापि नानापदि रात्रेः ससन्धिकायाः स्तोमविकारो विद्यते ।
10 सा कथं संशयेषु प्रतीयेत ।
अथापि महत्सु स्तोमेषु सन्धिस्तोत्रीयान् प्रत्यकल्पयिष्यत् ।
एतेन सर्व एकस्तोमा व्याख्याताः ।
अप्यहीनेषु, अथ षोडश्येकविंशस्तोमो वा स्यात् ।
अपि वा ये प्राक् त्रिणवत्रयस्त्रिंशाभ्यामहस्तोमास्तेष्वन्वियादेक-
15 विंशमुत्तमेष्विति ।
"तौ खल्विमौ द्वौ" दशरात्रौ भवतः ।
उभयत्राह दशमधर्मा मानसे तु विचारयन्ति ।" cp. Arṣ K. V. 129 b.
पूर्वस्मिन्नित्येके[13] ।
20 एषोऽयुक्स्तोमो विकृतो नानापृष्ठो धर्मीति ।
उत्तरस्मिन्नित्यपरम् ।
एष स्थानस्थः ।
अथापीदं यदनाप्तमेतदन्तेऽभिरूपम् ।
अथाप्येवं व्रतस्य मानस्य चा[15]पवायो भवति ।
25 अथाप्येवं त्रिवृत् पञ्चदशसम्पद् दशरात्रयोः सिध्यति ।
अथापि[16] यत्पूर्वस्मिन्नकरिष्यद् बहुना कृतो मानसमध्यशाययिष्यत् ।
अथापि [ यत् ] पूर्वस्माद् दशरात्राद् यद्वैपैति तस्यैतस्मिन्ननुप्रैह इति ।
'अग्न आयूंषि पवसे' इति SV. 2. 814, 869; RV. 9. 66. 19.

1 B omits इति. 2 मय० B. 3 C, G1, G2, J, K add द्वादशाहेषु. 4 ०यो G1, G2, J, K. 5 ०तो० G1, G2, J, K 6 सन्धि० B. 7 अथैते० C, G1, G2, J, K. 8 ०मस्तो० B. 9 ०त्तरे० C, G1, G2, J, K. 10 दा C, G1, G2, J. 11 G1 omits भवतः ··· दशरात्रो ( p. 182. 14. ). 12 ०भत्राह G2, ०भयत्राह J, K 13 ०त्येव K. 14 ०ष्ठे C, G2, J, K. 15 चावच्यवायोविष्यद् । G2, J, K 16 B adds यद्. 17 कृतेन C, G2, J, K. 18 Wanting in B, G2, J, K. 19 ०हू० C, K. 20 ०मह K.

उत्तरस्य दशरात्रस्य करोति ।
कस्य हेतोरिति ।
शुश्रुत्स्रुत् सत्रमिदं भवति ।
सैषाग्नेयी पवित्राभिव्याहारा शुद्ध्यर्थेऽभिरूपा ।
5 अथाप्याग्नेय्य आङ्गिरसः, सैषाङ्गिरसी येर्वतेति ॥ ७ ॥

प्रतिष्ठाकामसत्रमुत्तरम् ।
तत्र षाडह्निकान्मासभाजो रूढावृत्तान्निदधाति ।
एवं सिद्धौ रोहमत्यवरोहाविति व्याख्यातम् ।
व्रतं विषुवांस्तत्रोक्तमयनेषु ।
10 अपि च पृष्ठ्यस्तोमो विहृतः स्यादिति ।
अथाप्युदाहरन्ति ।
यज्ञसमास उत्तरम् ।
तत्रैतानि ह्युक्तानि स्थानानि ।
अतिरात्रः शौनासीर्यो मासो दशरात्रो महाव्रतमिति ।
15 कर्तव्यानीत्येके ।
कं पर्व सत्रन्याय इति ।
अकर्तव्यानीत्यपरम् ।
एवं पुराणं वेदयन्ते ।
अथाप्यनादिष्टः प्रायणीयो व्यूढेन भवति ।
20 "तत्र यत् पुरस्तादतिरात्रमकरिष्यंदलब्धो रोहोऽभविष्यत् ।
अपि च सुत्याः हविर्यज्ञा व्यवेयिष्यन्निति ।" cp. LŚ. 10. 11. 4; Katy. 24. 4. 39.
"यज्ञसमासत्वाद्धोत्रा समासः ।" cp. LŚ. 10. 12. 14.
हविर्यज्ञैकमत्यात् "अत्सरुकैश्चमसैर्भक्षयन्ति ।" cp. LŚ. 10. 12. 13;
25 Katy. 24. 4. 40; PB. 25. 4. 4; Āp. Ś. 23. 10. 11.
अथ खल्वत्र द्वौ गृहपती सन्निपततः ।

---

1 ०त्रे C, G2, J, K. 2 शिश्रुंस्त्र० C; शिश्रुस्त्र० G2, J, K. 3 पठिता० C. 4 ०राय B. 5 ०ह्यभि० G2, J, K. 6 ०य B, G2, J; ०या K. 7 अ० G2, J, K. 8 दै० G2, J, K. 9 Wanting in C. 10 ०मौ B; ०मो K. 11 ०त B, G2, K; ०तं J. 12 अप्यु० B, अप्यु० G2, J. 13 ०युक्तानि C, G2; ०युक्तानि J. 14 G1 resumes from here (see p. 181 no. 11). 15 C, G1, G2, J, K omit कं. 16 एव G1, G2, J, K. 17 ०ष्यं सुत्ये C, G1, G2, J, K. 18 ०र्यैष्य० B. 19 ०ए० C. 20 ०मत्वात् G1, G2, J, K. 21 ०पाततः C, G1, G2, J, K.

होत्राध्वर्यवेनैकेन सुवृत्तये इवै, स एष वृत्त्यर्थ एव द्वितीयः ।
स यद् गृहपतिरेतद्गणस्थानमिति ।
स्वर्गकामसत्रमुत्तरम् ।
तत्र संवत्सराभिप्रयोगो भवति ।
5 एवं यज्ञर्तपसोरभिवृद्धिरिति ।
तत्रोक्तमयनेह तेषां यान्येकाहैवैतन्ते गौरीवितानि तानि ।
यानि नानाहोभिः सगौरीवितानि तानि ।
नानाह्नां हि सन्तानार्थं गौरीवितमिति ।
"अथ पुरुषस्य नारायणस्यायने विश्वजिदेवोभयोः पक्षसोः स्यादित्येके ।"
10 cp. LŚ. 10. 13. 4; Kāty. 24. 7. 33.
एवं पक्षसोः समाधिरिति ।
यथासमाम्नायं त्वेवैमविलोप इति ।
अथैतेषु दशसु विचारयन्ति ।
कानीमान्यहानि स्युरिति ।
15 ज्योतिष्टोम इत्येके ।
एषोऽधिकृतः पुरस्ताद् भवति ।
अनाम्नान्येतानि पृष्ठ्यानि ।
ज्योतिष्टोमैं इत्यपरम्, पृष्ठं गृह्यमाणम् [ अहः ] गृह्णीयादिति ॥ ८ ॥
"अथैतत् क्षुल्लकतापश्चितमित्याचक्षते ।" cp. Kāty. 24. 5. 8.
20 "चत्वारो दैक्षा मासाश्चत्वार औपसदाश्चत्वारः सौत्याः ।" cp. Kāty. 24. 5. 1.
तस्य कल्पाः ।
गवामेवायनस्य प्रथमोत्तमौ पूर्वस्य पक्षसो मासौ स्यातां तथोत्तरस्य ।
अथैतं महातापश्चितमित्याचक्षते ।
25 चत्वारो दैक्षा मासाश्चत्वारः सौत्याः ।
तस्य कल्पः ।

---

1 ०ध्वर्यावि० J, ०ध्वर्यवो० K. 2 सुवर्त्तये C, G1, G2, J, K. 3 तु B. 4 ०रादिमायेणागे G1, G2, ०रादिमायाणागो J. 5 ०पतसो० G1, G2, J, K. 6 का० K. 7 Wanting in J. 8 Wanting in C; G1, G2 repeat it. 9 ०ह्ना C, G1, G2, J, K. 10 देवैवं लोप B; त्वेवैवमविलोप C, G1, G2, J. 11 एषोऽवि० Cक; एष वि० Cख, G1, G2, J, K. 12 ज्यौ० C. 13 ०मन् C, G1, G2, J, K. 14 Wanting in B. 15 ०रो G1, G2, J. 16 सौम्याः B, K. 17 गवामयन० C; गवायन० G1, G2, J. 18 ०सोर्मा० C. 19 तथान्तस्य C; तथातस्य G1, G2, J. 20 ०न् C, G1, G2, J, K. 21 ०त इ० G1, G2, J, K. 22 ०श्चाः संवत्सराश्चत्वार औपसदाश्च० C, G1, G2, J, K. 23 सौस्याः G1, G2. सौस्याः J.

गवामेवायनं चतुरुपेयुः ।
अपि चैतस्यैव पक्षस्याभिवृद्धे स्याताम् ।
त्रयोविंशतिरयनमासोः पूर्वे पक्षसि स्युः ।
द्वाविंशतिरुत्तरे ।
5 अपि वैतान्येव प्रथमानि चत्वारि समस्येत् ।
यथा त्रीणीति संवत्सर इति ।
अपि वा ज्योतिष्टोमायनमेव कुर्वीरन् ।
एतेषां यन्मन्येरन् तत् ।
अपि वा यथा गणसंवत्सराणां तथा कल्पं कुर्वीत ।
10 "अथैतत् शार्कस्याना९ षट्त्रिंशत् संवत्सरम् ।" PB. 25. 7. 1; cp. Āp. Ś. 23. 11. 11; ĀŚ. II. 6. 5. 16; Katy. 24. 5. 20; ŚŚ. 13. 28. 6.
तरसपुरोडाशमत्रसंरोधात् ।
यदन्नः पुरुषस्तदन्ना स्याद् देवतेति ।
15 ते यन्मांसमया वा श्यामाकमया वोभे आपन्ने, हविष्ट्वमिति ।
अथैतानि महासत्राणि देवानामेव, दीर्घायुषो देवा इति ।
मनुष्याणामपि सिद्धानि स्युरित्यपरम् ।
बह्वः संनिविश्य सुनुयुः पुत्राः पौत्राः प्रपौत्रा इति ।
तानि खल्वनेतिरात्राण्यविषुवत्कान्यूर्ध्वायनानीमानि भवन्ति ।
20 तत्र यदतिरात्रं वा विषुवन्तं [ वा ] करिष्यंल्लुब्धो रोहोऽभविष्यत् ।
अथापि न कल्पेनादेशो विज्ञायते नो ब्राह्मणेन ।
अथाप्येवं पुराणं वेदयन्ते ।
अथाप्याह—"एकविंशोऽन्ततः स्तोमानां भवति" इति । PB. 25. 8. 6.
शतसंवत्सरेऽनतिरात्रस्यैव सत इति ।
25 "अथैतदग्नेः सहस्रसाव्यं परमां विराजमुपकृतम् ।" cp. LŚ. 10. 14. 11; ŚŚ. 13. 27. 7.
सहस्रसंवत्सरेप्सामुपकृतं वा सहस्रसंवत्सरेप्सामेवोपकृतं स्यात् ।

1 ०सो B. 2 खु wanting in G1, G2. 3 ०णि C, G1, G2, J; ०णिनि K. 4 Wanting in G1, G2. 5 तमेषां G1, G2, J, K. 6 शाकाः B. 7 तस्यु० B. 8 ०न्नदास्य दे० C; ०न्नाद्रस्य दे० G1, G2, J; ०न्नास्य दे० K. 9 स्या० C, G1, G2, J, K. 10 ०न्नानां B. 11 Wanting in G1, G2, J. 12 ०नति० C, G1, G2, J, K. 13 अत्र K. 14 Wanting in B. 15 ०ष्यंत्तु० C, K; ०ष्यत० G1, G2; ०ष्यस्त० J. 16 मोहो० B. 17 तु C; न G1, G2, J, K. 18 C, G1, G2, J, K add अपि वा.

तत्रोक्तमयनेषु तत्रोक्तमयनेषु ॥ ९ ॥

नवमः पटलः

स्वर्गकामसत्रमुत्तरम् ।
तद्यत् सारस्वतमेषा स्वर्गोका भवतीति ।
5 अथैषोऽग्नये कामायेष्टिः पृष्ठशमनीयेनैव भवति ।
अथ खल्वाह—"तस्यामश्वां च पुरुषीं च धेनुके दद्युः" इति । cp. LŚ. 10. 17. 16; PB. 25 10 22; ĀŚ. II. 6. 6 30; Katy. 24. 6. 8; ŚŚ. 13. 29. 21; Āp. Ś. 23. 13. 6.
केभ्यो दद्युरिति ।
10 प्रसर्पकेभ्य इत्येके ।
दृश्यते च प्रसर्पकेभ्यो दानम् ।
अथापि व्रात्यस्तोमेष्वनृत्विग्भ्यो ददातीति ।
पृथगेवेतरेतरस्मा इत्यपरम् ।
कर्तृभिः संयुक्ताः क्रतुदक्षिणा भवन्ति ।
15 तत्रापरिवर्तमाने किमर्थोऽश्वयवं प्रतीयादिति ।
अर्णायां कृत्यामुदवसानीयाभिरिष्टिभिर्यजेरन्निति गौतमः ।
एवं वदति सरस्वांकर्म भवति ।
अथाप्येषा लोकोक्ता भवतीति ।
सारस्वत एवोत्तरे कुशलं यत् संन्नतस्तुल्ये ।
20 "त्रिवृत्पञ्चदशमिन्द्राग्न्योरयनम् ।
एताविन्द्राग्न्योर्भक्ती इति यद् गोआयुषी [ इन्द्रकुक्षी ] समाये च ।" PB. 25. 11. 1, 4. Āp. Ś. 23. 13. 7.
अपि चैन्द्राग्निभ्यामेत्याधिस्त्रिवृत् पञ्चदशयोरिति ।
त्रिकद्रुकक्लृप्तमुत्तमस्य ।

1 तत्रोक्त॰ C. 2 Wanting in C, G1, G2, J, K. 3 In B only. 4 ॰मः स॰ C, G1, G2, J, K. 5 ॰का॰ B. 6 ॰नार्थे॰ B. 7 ॰दवं B. 8 पुरुषं B, पुरीषीं C. 9 दत्ता C, G1, G2, J, K. 10 ॰ते B. 11 Wanting in G1, G2. 12 ॰वैतरेतरस्मा C, G1, G2, J, K. 13 तत्रातपनिवर्त्ये॰ C, G1, G2, J, K. 14 ॰माय इच्युत॰ B; अरूणायां K. 15 ॰ज्ञे॰ G1, G2, J. 16 एवमुदक्स॰ C, G1, G2, J, K. 17 ॰स्वं कर्म C, G1, G2, J, K. 18 B adds ते. 19 सन्ननिर्मल्वेति B. 20 ॰न्द्राग्न्या॰ G1, G2, ॰न्द्राम्न्या॰ J. 21 ॰नाम् G1, G2, J, K. 22 ॰ग्न्यार्म॰ G1, G2, J. 23 ॰क्तिरिति B. 24 यद् B. 25 ॰षः B. 26 Wanting in B. 27 चैतानम्याम॰ C; चैनान्यान॰ G1; चैनाम्यान॰ G2, J, K. 28 ॰नि॰ B.

पते यदि[1] न दृष्टो[2] इति ।
"यत्तु विश्वजिदभिजितावभिन्द्रकुक्षी" समाये[3] च । ŚS. 13. 29. 25; Āp. Ś. 23. 13. 9.
अपि च[4]ार्णवे द्वा[5]भ्यामत्याधिस्त्रिकद्रुकाणामिति ॥ १० ॥
5 अथैतद्दार्षद्व्रत[6] स्वर्गकामायनम् ।
तस्यैते पुरश्चरणे गौपाल्यं चाग्नीन्धनं च ।
दीक्षाभ्यः प्र[7]थममिति गौपाल्यमुपसद्भ्योऽग्नीन्धनम् ।
स यदृ[8]त्विजो वा[9]चार्यस्य वैतौ स्थानिनौ गुरू तयोः प्रेपचरणमभिरूपम् ।
"तदेवं[10] मनुष्येभ्यस्तिरोभवन्ति[11] ।" इति । PB. 25. 13. 4; LŚ. 10.
10 19. 11; Āp. Ś. 23. 13. 15.
"तत एवारण्यमाविशेत् [ न[12] ] पुनर्ग्राममिमा[13]मव्रजेदिति ।" cp. LŚ. 10. 19. 12.
"स्वर्गं लोकमाक्रमते" इत्येके । LŚ. 10. 19. 13.
"व्या[14]वर्तते ।
15 श्रेयान् भवती[15]ति वा ।" LŚ. 10. 19. 14.
"अथैतत्[16]तौरभिष्ट्य[17]यनं विरा[18]ड्कामायनम् ।" cp. PB. 25. 14. 5; Āp. Ś. 23. 14. 1; LŚ. 10. 20. 1; Katy. 24. 7. 1.
अपि[19] वा संवत्[20]सरसुत्यां नेदीयस्या मात्रयेप्सीत्[21] ।
किमर्थं उ तदिति ।
20 ज्यायः स्यादिति ।
अननुभूतिजं स्यादिति ।
सिद्धि[22]दर्शी वा स्यात् ।
सिध्यति वै खलु संवत्सरसुत्याया ई[23]ष्ट्ययनेनाप्तिः ।
तत्रापि सुत्या देवता भवन्ति ।
25 यौ[24]वदेवमर्थरू[25]पं च ।

1 ऽयने C, K; यदे G1, G2, J. 2 °ष्ट C. 3 °मायौ B. 4 Wanting in C, G1, G2, J, K. 5 ताभ्या° C, G1, G2, J, K. 6 °तदार्षद्व्रत॰ B 7 प्रति C, G1, G2, J, K. 8 यदर्त्वि° G1, G2, J. 9 वाचाभ्यस्य B; तावयस्य G1, G2; तावार्यस्य J, K. 10 °वं B. 11 °न्ति B. 12 Wanting in B 13 °मं मा° B. 14 अभ्यावर्तते B. 15 °वति B. 16 °ततौ° G1, G2. 17 °रनिष्पायनं B. 18 स्वर्गकामाय तमेवाभिरूपं C; स्वर्गकामाय तमेव G1, G2, J, K. 19 तदेव for अपि वा in C. 20 सं° B. 21 मात्रयः C; मात्रयः G1; मात्रयः G2, J, K. 22 सिद्ध° B. 23 दृष्ट्य° G1, G2, J, K. 24 यावर दे° B. 25 °र्था° G1, G2, J, K.

"अदीक्षितः कृष्णाजिनं प्रतिमुञ्चते ।" PB. 25. 14. 2; cp. LŚ. 10. 20. 2; Katy. 24. 7. 3; ĀP. Ś. 23. 14. 2.
नवनीतेनाङ्गान्यभ्यङ्क्ते, दीक्षारूपमेतद्भवति ।
व्याख्याता इष्टयः ।
5 इष्ट्यन्तं वा पश्वन्तं सोमान्तं वा कुर्वीतेति ।
उभयोः पृष्ठशमनरूपमेतद् भवति ॥ ११ ॥

"सर्पसत्रे किमयनं स्यादिति ।
गवामयनम् ।
स्तोमविकृतमित्येके ।" cp. ĀŚ. II. 6. 5. 7; Katy. 24. 4. 48, 49;
10 ĀP. Ś. 23. 14. 10.
अनादिष्टान्यहानि व्यूहेन भवन्ति ।
संवत्सर आदिश्यते ।
तत्र किमर्थोऽवयवं प्रतीयादिति ।
अथापि विषुवदादेशेन रोहप्रत्यवरोहौ, गवामयनोत्पादावेतौ भवतः ।
15 अथाप्याह—"षण्डकुषण्डावभिगरापगरौ" इति । PB. 25. 15. 3; LŚ. 10. 20. 10.
व्रतेऽभिगरापगरौ भवतः ।
कौसुरुबिन्दे प्रत्यवरोह इति गौतमः ।
एते कल्पेऽनादिष्टे भवतः ।
20 यद्येतदनादेश इति, आदिष्टे कल्पे न भवतः ।
यद्येतद् विषुवदादेशेन रोहप्रत्यवरोहाविति, दृश्यते विषुवानेतयोस्तन्त्रयोः ।
अर्हति वातवतोरयने तथा रोहप्रत्यवरोहाविति ।
यद्येतत् "षण्डकुषण्डावभिगरापगरौ" इति, अन्यत्र सतोरवैदिष्यत् ।
25 ibid.
अपि चैद्दोपासकयोः ।
अपि वा वचनादभिगरापगरौ स्याताम् ।

---

1 दीष्टं तं त G1, G2; दीष्टयन्त J; दीष्टयन्तं K. 2 ०कृत इत्ये० B, C. 3 B omits मयनोद. 4 प० B. 5 ०वा० C. 6 Wanting in C, G1, G2, J, K. 7 अयने तदा० B. 8 Wanting in Cख, G1, G2, J, K. 9 यद्येत is wanting in G1, G2, J, K. 10 ०ता० C. 11 ०प्रव० G1, G2, J. 12 इवति वा भवतो० B; दति वानवतो० G1; दति वातवतो० G2, J. 13 ०तोवरदि० G1, G2, J. 14 वेहो० C, तेहो० G1, G2, J, K. 15 Wanting in G1, G2, J, K.

तत्खलु रूढमत्यवरूढं ततो विषुवानिति ।
व्याख्यातानि सर्पसामानि ।
विषुवति सर्पसामानि कल्पप्रायाणि ।
तेषां यदेवमानुपूर्व्यं निधनान्येषामौदित्यस्यैषामुपकृतानि तेषामेवानु-
5 पूर्व्यम् ।
अथाप्येषामेतद्गणनिधनम् ।
तत् त्रिणिधनानुग्रहाय माध्यन्दिनेऽचिकीर्षीत् ।
आनुपूर्व्यमितरे ॥ १२ ॥

अथैते गौपूक्तश्वसूक्ते भ्राजाभ्राजयोः स्थाने समाये च ।
10 अपि वैनयोर्ज्योतिः समाये [ निधने ] यथा भ्राजाभ्राजयोरिति ।
दशिनं स्तोमं करोति, दशदुकाः सर्पा इति ।
द्वादशं विषुवन्तमित्याधित्सन् ।
अथापि शश्वद् द्वादशौ विषसेचनौ नाम सर्पाणां दन्तौ भवतः ।
तद्रूपं विषुवत्यचिकीर्षीत् ।
15 प्रजापतिकामसत्रमुत्तरम् ।
तत्र संवत्सराभिप्रयोगा भवन्ति ।
संवत्सरं हि प्रजाः "पशवोऽनुप्रजायन्ते" इति हि भवतीति । PB. 19. 5. 5.
तत्रैतान्येव त्रीणि समस्य निर्दधाति ।
20 एवमावृतीयं पृष्ठ्याभिप्लवयोर्दशरात्रस्येति विकार उपपत्स्यत इति ।
" 'तत्रैके' गवामयनमन्ततः कुर्वन्ति प्रजापतिकामसत्रत्वात् ।
एतेन वै गावः प्रजातिं भूमानमगच्छन् प्रजायन्ते बहवो भवन्तीति' ।'
cp. PB. 15. 3. 21; Āp. Ś. 23. 14. 11.
स्तोमतश्चैव गवामयनानां रोहो भविष्यतीति ।" Sāy. PB. 25. 16. 3.
25 अथैतत् "प्रजापतेः सहस्रसंवत्सरं परमां विराजमुपकृतम् ।" Āp. Ś. 23. 14. 12.

---

1 ०ब्लकुभो वि० B. 2 भास्वा० B. 3 Wanting in G1, G2, J, K. 4 कल्पसमा० C, J, K, कल्पसम० G1, G2. 5 ०णीनि C, G1, G2, J, K 6 ०र्थं B. 7 ०ना० G1, G2, J. 8 ०स्येवानु० B, K, ०स्येवानु० G1, G2. 9 वत्र B. 10 निध० B. 11 म० B. 12 अ० B, G1, G2, J, K. 13 ०र्व० B, G1, G2, J, K. 14 ०दनि० G1, G2, J, K. 15 Wanting in B. 16 दशकाः B. 17 सर्वो B 18 ०भ्रमनेत्या० G1, G2; ०वन्तनेत्या J. 19 ०मत्यासिषद् B. 20 तथा० G1, G2, J. 21 B ends here abruptly after दा. 22 प्रजाति० C, J. 23 ०नो C. 24 निधाति J. 25 तत्रैव G1, G2, J, K. 26 प्रजाति० C, G1, G3, J. 27 K adds हि भवन्ति. 28 एवे० C. 29 परमं J.

अपि वा प्रजापतीप्सामेवोपकृतꣳ स्यात् ।
तत्र खलु त्रिवृतं करोति, रंथान्तरं च लघुश्चाग्रस्तोमश्चाग्रं प्रजापतिरिति ।
ज्योतिष्टोमं तन्त्रम् ।
आग्निष्टोमीꣳ संꣳस्थाꣳ रथन्तरपृष्ठम् ।
5 तत्र खलु बृहस्पतिसवं करोति ।
एषोऽग्निष्टोमस्त्रिवृतस्तोमो रथन्तरपृष्ठो ज्योतिष्टोमतन्त्रो भवतीति न्याय-
क्लृप्तमुत्तरं न्यायक्लृप्तमुत्तरम् ॥ १३ ॥

इति निदानसूत्रे दशमः प्रपाठकः

निदानसूत्रं समाप्तम्

---

1 यथा॰ C; रथ॰ is suggested. 2 ॰स्तवे G1, G2, J, K.

# निदानसूत्रवृत्तिः

त्रिनेत्रं भारतीमीशमाचार्यञ्च पतञ्जलिम् ।
नत्वा निदानसूत्रस्य वृत्तिं कुर्वे यथामति ॥१॥
क सूत्रमतिगम्भीरं कैतद्वृत्त्या नु साहसम् ।
तातप्रसादः कुरुते वृत्तिं तत्त्वसुबोधिनीम् ॥२॥

**अथातश्छन्दसां विचयं व्याख्यास्याम इति ।**

अथशब्द आनन्तर्यार्थे । अतःशब्दो हेतोर्वृत्तत्वे । तत्र प्रतिपत्तृगामेतत्सूत्रप्रवृत्ति-नियमेन यदनन्तरं तदनन्तरम् । सूत्रार्थश्च ऋक्सामयन्त्रब्राह्मणार्थरूप इति, तेषामध्ययना-नन्तरं सूत्रार्थप्रतिपत्तिहेतोरध्ययनस्य वृत्तत्वात्, तेष्वनुष्ठानायार्थविशेषं जिज्ञासमानानाम्, विचयं विचीयते निर्णीयतेऽनेनेति व्युत्पत्त्या ज्ञानसाधनीभूतं सूत्रं व्याख्यास्यामः स्पष्टं करिष्याम इत्यर्थः ।

**त्रयश्छन्दःपादा भवन्तीति ।**

छन्दसां पादास्त्रयस्त्रिविधा भवन्ति, विधानमन्तरेणापरिमितानां पादानां त्रित्वानुप-पत्तेरिति ध्येयम्; के ते त्रय इत्यत आह—

**अष्टाक्षर एकादशाक्षरो द्वादशाक्षर इति ।**

स्पष्टम् । अक्षरसंज्ञा ह्यचामेव, व्यञ्जनं त्वक्षराङ्गम्, न तान्यक्षराणि, "व्यञ्जनमपराङ्गं विरामे लुप्यते" इति फुल्लसूत्रे ( Ph. p. 117. 5. ) व्यञ्जनानामङ्गत्वव्यपदेशात् । उक्तं च शौनकेन—

"सव्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरम् ॥" इति । RPr. 18. 32.

अनुमतश्चायमर्थ आचार्यस्य—"अच एवाक्षरम्" इति ।

यत्र ह्रस्वमक्षरमुपोत्तमं पादस्य भवति सा जागती वृत्तिः । यत्र दीर्घं सा त्रैष्टुभीति । ह्रस्वदीर्घाभ्यामक्षरस्य विशेषणादचामेव ह्रस्वदीर्घत्वादयः, तथा च पाणिनिः—

"ऊकालोऽज्झ्रस्वदीर्घप्लुतः" ( Pāṇ. 1. 2. 27. ) इति ।

ननु चतुर्थोऽपि छन्दःपादोऽस्ति दशाक्षरः, तत्कथमुक्तं त्रयश्छन्दःपादा भवन्तीति । अत आह—

तन्मिश्रं दशाक्षर इति ।

तन्मिश्रम्, छान्दसं नपुंसकम्; तन्मिश्रः तेष्वन्तर्भूतो दशाक्षरः पाद इत्यर्थः। तत्रैकादशाक्षरपादे दशाक्षरपादोऽन्तर्भवति, श्रुतिसारूप्यात् सङ्ख्यासामीप्याच्च । अतएव त्रिष्वे-वान्तर्भावात् पृथक् प्रतिक्रमाभिक्रमौ नोक्तौ । ननु दशाक्षरपाद इहैवान्तर्भूतः, तथाप्यन्ये सन्ति पञ्चाक्षरप्रभृतय इति । अत आह—

अष्टाक्षर आपञ्चाक्षरतायाः प्रतिक्रामेत्यादि ।

"अर्चामि सत्यसवम्" SV. 1. 464.

इत्यन्तम् । तथा च पञ्चाक्षरपादादयोऽष्टादशाक्षरपादान्तास्त्रिष्वेवान्तर्भवन्तीति न प्रक्ष-रान्तरप्रसक्तिरिति भावः । अक्षरार्थस्तु, अष्टाक्षर आपञ्चाक्षरतायाः प्रतिक्रमति ।

"विश्वेषां हितः" इति । SV. 1.2; 2.824; RV. 6. 16. 1.

पञ्चाक्षराणि यस्य स पञ्चाक्षरः, तस्य भावः पञ्चाक्षरता, आपञ्चाक्षरतायाः पञ्चाक्षर-तापर्यन्तमष्टाक्षरः पादः प्रतिक्रमति न्यूनो भवति । अत्रोदाहरणम्—

"विश्वेषां हितः" इति । ibid.

अयं

"त्वमग्ने यज्ञानाम्" इति ibid.

गायत्र्या द्वितीयः पादः । नन्वत्र शौनकेन—

"उत्तरोत्तरिणः पादाः षट्सप्ताष्टाविति त्रयः ।

गायत्री वर्धमानैषा "त्वमग्ने यज्ञानामिति ॥" RPr. 16. 24.

पादकल्पनेन द्वितीयपादस्य सप्ताक्षरत्वावगमात् कथमस्य पञ्चाक्षरत्वनिर्णयः ! उच्यते, "होता" इति पादस्य पूर्वत्रान्वयमुपगम्य द्वितीयः पादः पञ्चाक्षर इत्याह । आचार्यशौनक(स्तु) "होता" इत्यस्य 'विश्वेषाम्' इत्यत्रान्वयमनभ्युपेत्य सप्ताक्षर इत्यवोचत् । अर्थवशेन पादस्य व्यव-स्थेति न्यायविदः । अत्र मतभेदेन व्यवस्थितोऽस्य विकल्प इति न विरोधः । षडक्षरसप्ताक्षर-योस्तूदाहरणम्—

"मित्रमिव प्रियम्" SV. 1. 5; 2. 594; RV. 8. 84. 1.

"परमाश्चित्सधस्थात्" इति । RV. 8. 11. 7.

आचतुरक्षरताया इत्येक इति ।

एके आचार्याः । अष्टाक्षरपादश्चतुरक्षरतायाः पर्यन्तं प्रतिक्रमति । उदाहरणम्—

"न तमंहो न दुरितम्" SV. 1. 426.

इति पङ्क्तौ, अतिद्विष इति पञ्चमः पादः । न वेरोशिरिपादक्षरलीति प्राप्यम् ।

तथा मति

"अभि त्वा शूर नोनुमः" SV. 1. 233.

इत्यादौ बृहत्सामिव समाम्नानं स्यात् । नच तथाम्नायते, पङ्क्तिसन्निधावाम्नायते, तस्मात्प्रायः पाठाभावात्पङ्क्तिरेवेति गृह्णीम इति ।

आदशाक्षरताया अभिक्रामति ।

"वयं तदस्य संभृतं वसु" इति । RV. 8. 40. 6.

अष्टाक्षरपादो दशाक्षरपर्यन्तमभिक्रामति वर्धते । तत्रोदाहरणम्—

"वयं तदस्य" इति । ibid.

अयम्

"अपि वृश्च पुराणवत्" इति ibid.

षट्पदाजगत्याश्चतुर्थः पादः । अस्यास्त्वष्टाक्षरपदेति लक्ष्यमिति । नवाक्षरस्य

"न देवो वृतः शूर इन्द्रः" इति । SV. 1. 196.

एकादशाक्षर आनवाक्षरतायाः प्रतिक्रामतीति ।

गतम् । अत्रोदाहरणमाह—

"यदि वा दधे यदि वा न" इति । RV. 10. 129. 7.

"इयं विसृष्टिर्यत आबभूव" इति ibid.

त्रिष्टुभो द्वितीयः पाद इति । दशाक्षरस्य

"पृथिव्यामतिषितं यदूधः" इति । RV. 10. 73. 9.

अ[आ]ष्टाक्षरताया इत्येक इति ।

एकादशाक्षरः पादोऽष्टाक्षरतायाः प्रतिकामति । उदाहरणम्—

"हव्या जुषस्व मेधिर" इति । RV. 3. 21. 4.

आपञ्चदशाक्षरताया अभिक्रामतीति ।

एकादशाक्षरपाद इत्यनुषङ्गः । अत्रोदाहरणम्—

"सत्रा दधानमप्रतिष्कुतं श्रवांसि भूरि" इति । SV. 1. 460; RV. 8. 97. 13.

"तमिन्द्रं जोहवीमि" इति *ibid.*

अस्या द्वितीयः पादः । नन्वियमृक् त्रिष्टुब् भवत्वेकादशाक्षरपादचतुष्टयत्वादिति चेन्न, आचार्यस्य मतेऽष्टाक्षरादिपादत्रयापेक्षयाऽधिकस्य छन्दःपादस्याभावादभिक्रान्तैरेतैरेव पादैश्छन्दोभवस्य वक्तव्यतया

"तमिन्द्रं जोहवीमि" इति ibid.

अस्या(!)तिजगत्यपरपर्यायविंशतिप्वस्य वक्तव्यत्वात्। तथा च भरतस्वामी—

"प्र वो महे मतयः" इति SV. 1. 462; RV. 5. 87. 1.

जगती।

"तमिन्द्रम्" इति। SV. 1. 460; RV. 8. 57. 13.

तादृशीति।

"वि सेनाभिर्भयमानो वि राधसा" इति SV. 1. 334; RV. 10. 23. 1.

द्वादशाक्षरस्योदाहरणम्।

"राये नो विश्वा सुपथा कृणोतु वज्री" इति SV. 1. 460.

त्रयोदशाक्षरस्य।

"न काममव्रतो हिनोति न स्पृशद्रयिम्" इति SV. 1. 441.

विषमपादायां चतुर्दशाक्षरस्य।

द्वादशाक्षर आनन्याक्षरतायाः प्रतिक्रामतीति।

स्पष्टम्। उदाहरति—

"अनूपे गोमान्गोभिरक्षाः" इति। SV. 2. 348; RV. 9. 107. 9.

"सोम उ ष्वाणः" SV. 2. 347.

प्रगाथे द्वितीय ऋचः प्रथमः पादः। दशैकादशयोरुदाहरणम्—

"त्यं सु मेषं महया स्वर्विदम्" इति। SV. 1. 377; RV. 1. 52. 1.

"चर्षणीधृतं मघवानमुक्थ्य३म्" इति। SV. 1. 374. RV. 3. 51. 1.

अ[आ]ष्टाक्षरताया इत्येक इति।

द्वादशाक्षरपादोऽष्टाक्षरतायाः प्रतिक्रमति। उदाहरणम्—

"अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचाभुवा।
सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना॥"
RV. 8. 35. 1.

इति। अत्र चतुर्थः पादः।

आपोऽन्याक्षरताया अभिक्रामति।

द्वादशाक्षरपाद इति शेषः। उदाहरति—

विकर्षेण

"त्वं वृत्राणि हꣳस्यप्रतीन्येक इत्पुरु" इति । SV. I. 248; 2. 761; RV. 8. 90. 5.

नन्वेतत्पादस्य त्रयोदशाक्षरत्वात्कथमुदाहरणमत आह—विकर्षेणेति । यकारवकारसंयोगविभागौ, तेन सह पठितत्वादिदं दर्शयति "त्वं वृत्राणि" ( ibid. ) इत्यादि । एतेन "द्वैधं कुर्यादसम्पूर्णे" इति ( Nid. p. 12 15)

वक्ष्यमाणसूत्रेण पादपूरणाय विकर्षः क्रियते । तत्रापि यकारात् पूर्वमिकारश्च प्रक्षेप्तव्य इति गम्यते । दशाक्षराद्युदाहरणम्—

"अभि वो वीरमन्धसो मदेषु गाय" इति । SV. 1. 265; RV. 8. 46. 14.

"सजूस्तवन्नुरिन्द्रं जजनुश्च राजसे" इति । SV. 1. 370; 2. 280; RV. 8. 97. 10.

"साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः" इति । SV. 2. 837; RV. 2. 22. 3.

द्वादशाक्षरपादोऽष्टाक्षरपर्यन्तं प्रतिक्रामतीत्येक इत्यन्ते उदाहरति—

"अर्चामि सत्यसवꣳरत्नधामभि प्रियं मतिं कविम्" इति ।

SV. 1. 464; ÇB. 3. 3. 2. 12.

अयमेव पादः सामशाखायां "कविम्" इति पाठाभावात् षोडशाक्षरः । सकारयुक्त··· "सत्यसवम्" इति पदरहिताद् यजुःशाखापाठात्सप्तदशाक्षर इति बोध्यम् ।

अथातो वृत्तिप्रदेश इति ।

अथात इति वाक्योपक्रमे । वृत्तिप्रदेशो वृत्तेरुपदेशः । वृत्तिर्नाम छन्दोविज्ञानहेतुः पादानामुपोत्तमाक्षरस्य लाघवं गौरवं चास्ति, तेन लघ्वक्षरेण छन्दोविशेषज्ञानाय वृत्तिरिति संज्ञा क्रियत इत्यर्थः ।

यत्र ह्रस्वमक्षरमुपोत्तमं पादस्य भवति सा जागती वृत्तिरिति ।

यत्र ऋचि पादस्योपोत्तममक्षरं ह्रस्वं भवति, सेति वृत्तिविशेषणत्वहेतुं स्त्रीत्वम्, जागती जगत्या विज्ञापिका वृत्तिः । यथा—

"विश्वाः पृतना अभिभूतरं नरः" इति । SV. 1. 370.

यत्र दीर्घं सा त्रैष्टुभीति ।

यत्र पादस्योपोत्तममक्षरं दीर्घमेकमात्रम्, त्रैष्टुभार्थम्, त्रैष्टुभी विज्ञायते सा वृत्तिरित्यर्थः ।

यथा—

"प्र तु द्रव" इति । SV. 1. 523; 2. 27; RV. 9. 87. 1; PB. 11. 3. 1.

ननु,

"आ जुहोता हविषा मर्जयध्वम्" इति SV. 1. 63.

एकादशाक्षरपादे जागती वृत्तिः स्यादिति । अत आह—

**ह्रस्वाक्षरस्योपरिष्टाद् व्यञ्जनसन्निपातेऽपि गौरवमिति ।**

उपरिष्टाद् व्यञ्जनानां सन्निपाते हलां संयोगः, तत्पूर्वाक्षरस्य ह्रस्वस्यापि गौरवं गुरुत्वम् । तथा पाणिनिः—

"ह्रस्वं लघु" ( Pāṇ. 1. 4. 10 ), "संयोगे गुरु" ( Pāṇ. 1. 4. 11 ), "दीर्घं च" ( Pāṇ. 1. 4. 12 ) इति ।

अत्रोपोत्तमस्याक्षरस्य ह्रस्वत्वेऽपि गौरवसम्पर्यत्वात् त्रैष्टुभी वृत्तिर्भवतीति भावः । एवं छन्दोवृत्तिमुक्त्वा पादवृत्तिमाह—

**अष्टाक्षरद्वादशाक्षरौ लघुवृत्ती, दशाक्षरैकादशाक्षरौ गुरुवृत्तीति ।**

लघु ह्रस्वं वृत्तिज्ञापकमुपोत्तममक्षरं ययोस्तौ तयोक्तौ । एवं 'गुरुवृत्ती' इत्यत्रापि बोध्यम् । अत्र दशाक्षरपादस्य पृथक् छन्दःपादत्वाभावेऽपि एकादशाक्षरपादे तुल्यवृत्तिप्रदर्शनं तनुभावेन तदन्तर्भावप्रदर्शनार्थम् ।

"अग्न आ याहि वीतये" SV. 1. 1; 2. 10; RV. 6. 16. 10.

"अभि प्रियाणि पवते चनोहितः" SV. 1. 554; 2. 50; RV. 9. 75. 1.

"प्र तु द्रव परि कोशं नि षीद" SV. 1. 523; 2. 27. RV. 9. 87. 1.

"पिबा सोममिन्द्र मन्दतु त्वा" इति SV. 1. 398; 2. 277; RV. 7. 22. 1; PB. 12. 10. 1.

अष्टाक्षरादीनां पादानामुदाहरणानि । ननु छन्दांसि व्याख्यास्याम इति प्रतिज्ञाय पादानां लक्षणकथनं [कथं] युक्तमित्यत आह—

**एतैः खलु छन्दांꣳसि वर्तन्त इति ।**

एतैरुक्तलक्षणैः पादैर्यथायथं छन्दांसि वक्ष्यमाणानि प्रवर्तन्ते । अतः पादलक्षणकथनं नायुक्तमिति भावः । यद्यप्यतिच्छन्दस्सु त्रयोदशाक्षरादयः पादाः सन्ति, तथाप्येवैषामेव पादानामनेकक्रमेणाक्षरसम्परस्परानुगुण्येन विराडादीन्यतिच्छन्दांसि भवन्तीति ध्येयम् । पादानां लक्षणं परिसमाप्य प्रकृतं प्रतिजानीते—

**पथ्यान्येवाग्रे सप्त चतुरुत्तराणि छन्दांꣳसि व्याख्यास्याम इति ।**

पन्थानं प्रातर्माध्यन्दिनतृतीयसवनरूपं यज्ञमार्गं सम्यगुपवर्तन्त इति पथ्यान्येव

सप्तगायत्र्यादिजगत्यन्तानि, चतुरुत्तराण्युत्तरोत्तरं च सङ्ख्यायातिरिक्तानि छन्दांसि, अग्रे विधृत्यादिभ्यः पूर्वम्, व्याख्यास्याम इति । यद्यपि चतुरुत्तराणि पङ्क्त्यादीनि तथापि तानि पथ्यान्येवेति प्रसङ्गादुक्तानीति न दोषः ।

इति निदानवृत्तौ प्रथमः खण्डः

---

**चतुर्विंशत्यक्षरा गायत्री, त्रिपदाऽष्टाक्षरपादा इति ।**

चतुर्विंशत्यक्षरा गायत्री भवतीति । तस्या इदं लक्षणम्—त्रिपदाऽष्टाक्षरपादेति । उदाहरणम्—

"अग्न आ याहि वीतये" इति । SV. 1. 1; 2. 10; RV. 6. 16. 10.

**अथापि चतुष्पदा भवति, षडक्षरपादेति ।**

अथाप्यन्येनापि प्रकारेण भवति । गायत्रीप्रकारान्तरमेव दर्शयति—चतुष्पदा भवति, षडक्षरपादेति । तदुदाहृत्य दर्शयति—

**तत्रापि पाञ्चाला उदाहरन्ति—**

**"पेटिलालकन्ते पेटाविटकन्ते ।**

**तत्र किंकुवद्वस्तजग्ध परेहि" इति ।**

तत्रापि प्रकारान्तरं पाञ्चालाः शाखाविशेषाध्येतारः पेटिलालक इत्युदाहरन्ति । शौनकस्तु

"इन्द्रः शचीपतिर्बलेन वीळितः ।
दुश्च्यवनो वृषा समत्सु सासहिः ॥" R Pr. 16. 17.

इत्युदाजहारेति । ननु त्रिपदाऽष्टाक्षरपादेत्येतावता तल्लक्षणसिद्धिः ।

**अष्टाविंशत्यक्षरोष्णिक् त्रिपदैव, पूर्वावष्टाक्षरावुत्तमो द्वादशाक्षर इति ।**

अष्टाविंशत्यक्षरोष्णिग् भवति । तस्या लक्षणम्—पूर्वावष्टाक्षरपादौ, उत्तमो द्वादशाक्षर इति । उदाहरणम्—

"अग्ने वाजस्य गोमतः" इति । SV. 1. 99; 2. 911; RV. 1. 79. 4.

**अथ यत्र मध्ये द्वादशाक्षरा सा ककुबिति ।**

यत्र ऋचां मध्ये द्वादशाक्षरपादो भवति, अभितोऽष्टाक्षरौ, सा ककुप् । यथा—

"पवस्व मधुमत्तमः" इति । SV. 1. 578; 2. 42; RV. 9. 108. 1;
PB. 11. 10. 3.

**यत्र प्रथमः सा पुरउष्णिगिति ।**

यत्र ऋचि द्वादशाक्षरपादः प्रथमः, उत्तरावष्टाक्षरौ, सा पुरउष्णिग् भवति । उदाहरणम्—

"आविर्मर्या आ वाजं वाजिनो अग्मन्" इति । SV. 1. 435.

अथापि चत्वारः सप्ताक्षरा इत्युदाहरन्ति—

"नदं व ओदतीनाम्" इति । SV. 2. 862; RV. 8. 69. 2.

अथाप्यन्यापि भवत्युष्णिक् । तस्या लक्षणम्—चत्वारः सप्ताक्षराः पादा इति शेषः । स्पष्टमन्यत् ।

द्वात्रिंशदक्षराऽनुष्टुप्, चतुष्पदाऽष्टाक्षरपादेति ।

अष्टाक्षरपादचतुष्टयवत्यनुष्टुब् भवति । यथा—

"गायन्ति त्वा गायत्रिणः" इत्यादिः । SV. 1. 342; 2. 694; RV. 1. 10. 1.

अथापि त्रिपदा भवति ।

अन्यापि त्रिपदा भवति । कथमित्यत आह—

मध्येऽष्टाक्षरोऽभितो द्वादशाक्षराविति ।

यथा—

"परि षु प्र धन्व वाजसातये" SV. 1. 428; 2. 714; RV. 9. 110. 1.

"अनु हि त्वा सुतं सोम मदामसि" इति । SV. 1. 432; 2. 716; RV. 9. 110. 2.

तां पिपीलिकामध्येत्याचक्षत इति ।

तामष्टाक्षरपादमध्यामनुष्टुभं पिपीलिकमध्येत्याचक्षते मन्त्रविदः, तथा च ब्राह्मणम्—

"पिपीलिकमध्यासु स्तुवन्ति" इति । PB. 15. 11. 8.

दैवताध्याये च पिपीलिकमध्येत्यौर्णनाभमिति । पिपीलिकया मध्यमिव मध्यं यस्या इत्युक्ता, तथाऽऽचक्षत इति तदर्थः ।

मध्येज्योतिरिति बह्वृचा इति ।

तां पिपीलिकमध्यां बह्वृचा मध्येज्योतिरित्याचक्षते । वैपरीत्येनाप्यस्यापरमेव दर्शयति—

एष पादो यतो यतः परिक्रामेत्

निवृद्, तत्र यत्रस्थानि तं पादं ज्योतिरित्याचक्षते । ननु मध्येज्योतिःप्रभृतीनां कथं मुक्तं—इत्यतो नामान्तरमपि दर्शयति ।

पुरस्ताज्ज्योतिर्मध्येज्योतिरुपरिष्टाज्ज्योतिरिति ।

मध्येज्योतिषः पुनरनुक्रमेण पुरस्ताज्ज्योतिरुपरिष्टाज्ज्योतिषोऽनुष्टुबार्धमुदाहरणम्। पुरस्ताज्ज्योतिषो मृग्यम्, उपरिष्टाज्ज्योतिषस्तु—

"मा कस्मै धातमभ्यमित्रिणे नो मा कुत्रा नो गृहेभ्यो धेनवो गुः।
स्तनाभुजो अशिश्वीः॥" इति। RV. 1. 120. 8.

षट्त्रिंशदक्षरा बृहती चतुष्पदैवेति।

अनुष्टुबपेक्षया पादाधिक्यव्यवच्छेदार्थमेवकारः। अत्र प्रथमः पादो द्वादशाक्षरो भवति। इतरे त्रयोऽष्टाक्षराः। एवं सति बृहतीत्युच्यते। तथा च पिङ्गलनागः—

"बृहती जागतस्त्रयश्च गायत्राः" P. 3. 26.

"पथ्या पूर्वश्चेत्तृतीयः।" इति। P. 3. 27.

उदाहरणम्—

"अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः।
त्वं तस्यामित्रहन्वधर्दासस्य दम्भय॥" इति। RV. 10. 22. 8.

इयमेव पुरस्ताद्बृहतीति वक्ष्यते। पथ्याबृहत्याः पादस्थितिमाह—

त्रयोऽष्टाक्षरा उपोत्तमो द्वादशाक्षरस्तां पथ्येत्याचक्षत इति।
अपि च स्कन्धोग्रीवीति।

यदि द्वादशाक्षरः पाद उपोत्तमो भवति प्रथमद्वितीयचतुर्थास्त्रयोऽष्टाक्षरास्तां पथ्यां बृहतीं स्कन्धोग्रीवीत्याचक्षत इति। बृहतीषु इयमेव पथ्या न्याय्या भवति, न पूर्वोक्तेति भावः। यथा—

"यज्ञायज्ञा वो अग्नये" इति। SV. 1. 35; 2. 53; RV. 6. 48. 1.

अथ यत्र प्रथमो द्वादशाक्षरः सा पुरस्ताद्बृहतीति।

स्पष्टम्। उदाहरणं पूर्वोक्तम्।

यत्र द्वितीयः सोरोबृहती, सैव न्यङ्कुसारिणीति।

यत्र ऋचि द्वादशाक्षरपादो द्वितीयो भवति सोरोबृहती, स्कन्धोग्रीवीति चोच्यते, न्यङ्कुसारिणीति चोच्यते। उदाहरणम्—

"मत्स्यपायि ते महः" इति। SV. 2. 782; RV. 1. 175. 1.

यत्रोत्तमः सोपरिष्टाद्बृहतीति।

स्पष्टम्। यथा—

"विश्वाः पृतनाः" इति SV. 1. 370; 2. 280; RV. 8. 97. 10;
PB. 12. 10. 2.

वृत्ते

"नेमिं नमन्ति चक्षसा" इति SV. 2. 281; RV. 8. 97. 12.
उभे ऋचौ ।

अथापि चत्वारो नवाक्षरा इत्युदाहरन्ति ।

"उपेदमुपपर्चनम्" इति । RV. 6. 28. 8.

अन्यापि बृहती भवति । कथं चत्वारो नवाक्षराः पादा इति—
"उपेदमुपपर्चनमासु गोषूप पृच्यताम् ।" इति ibid.
Lc. 3. 3. 4.

सूत्रपठितानि तत्राक्षराणि विकर्षेण गणनीयानि ।

अथापि त्रिपदा भवति, द्वादशाक्षरपादा ।

"प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम्" इति । SV. 2. 844;
RV. 9. 110. 8.

तां सतोबृहतीत्याचक्षत इति ।

स्पष्टम् । तथा च ब्राह्मणम्—
"'प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम्' इति
सतोबृहत्यो भवन्ति" इति । PB. 16. 11. 8.

बार्हतमपि तृचं सतोबृहत्य इत्येवाचक्षते । यथा—

"वयं घ त्वा सुतावन्तः" इति । SV. 1. 261; 2. 214; RV. 8. 33. 1; PB. 12. 4. 3; 14. 4. 1.

बार्हतं बृहतः सम्बन्धि तृचमेकस्तोत्रसाधनीभूतम् त्र्यृचमपि सतोबृहत्य इत्येवाचक्षत इति । यथा—
"वयं घ त्वा सुतावन्तः" इति । ibid.
तथा च ब्राह्मणम्—
"'वयं घ त्वा सुतावन्तः' इति
सतोबृहत्यो वर्षीयश्छन्द आक्रमते" इति । PB. 12. 4. 3; 14. 4. 1.
"आ त्वा सहस्रमा शतम्" SV. 1. 245; 2. 741; RV. 8. 1. 24.
"क ईं वेद सुते सचा" इति SV. 1. 297; 2. 1046; RV. 8. 33. 7; PB. 14. 10. 1.

सोदाहरणम् ।

इति निदानवृत्तौ द्वितीयः खण्डः

---

**चत्वारिंशदक्षरा पङ्क्तिः, पञ्चपदाऽष्टाक्षरपादेति ।**

स्पष्टम् । यथा—

"स्वादोरित्था विषूवतः" इति । SV. 1. 409; 2. 355; RV. 1. 84. 10; PB. 13. 4. 16.

**अथापि चतुष्पदा भवति, द्वादशाक्षरोऽष्टाक्षर इति व्यत्यास इति ।**

चतुष्पदापि पङ्क्तिर्भवति, तस्या द्वौ पादौ द्वादशाक्षरौ द्वावष्टाक्षरौ, तेषां चतुर्णामपि द्वादशाक्षरोऽष्टाक्षर इति व्यत्यासः कार्यः ।

**तां सिद्धाविष्टारपङ्क्तिरित्याचक्षत इति ।**

एवं व्यत्यस्तपादां सिद्धाविष्टारपङ्क्तिरित्याचक्षत इति । यथा—

"न त्वावाँ अन्यो दिव्यो न पार्थिवः" इति । SV. 2. 31; RV. 7. 32. 23.

**विपर्यासे विपरीता स्यात् सैवेति ।**

उक्तपादव्यत्यासे विपर्यासे सति अष्टाक्षरो द्वादशाक्षर इति सैव विष्टारपङ्क्तिर्विपरीता सिद्धाविष्टारपङ्क्तिर्भवति । यथा—

"य ऋष्वः श्रावयत्सखा विश्वेत्स वेद जनिमा पुरुष्टुतः ।
तं विश्वे मानुषा युगेन्द्रं हवन्ते तविषं यतस्रुचः ॥" इति ।

RV. 8. 46. 12.

आस्तारपङ्क्तिलक्षणम्—

**अथ यत्र पूर्वावष्टाक्षरावुत्तरौ द्वादशाक्षरौ साऽऽस्तारपङ्क्तिरिति ।**

यत्र ऋचि पूर्वौ प्रथमद्वितीयौ पादावष्टाक्षरौ, उत्तरौ तृतीयचतुर्थौ पादौ द्वादशाक्षरौ, साऽऽस्तारपङ्क्तिरिति । उदाहरणम्—

"अग्निं न स्ववृक्तिभिः" इति । SV. 1. 420; RV. 10. 21. 1.

अत्र हेतुवादमाह—

**आस्तीर्णाविवैतौ पङ्क्तिपादाविति ।**

एतौ द्वादशाक्षरपादौ परतः स्तीर्णाविव । तदुक्तं पिङ्गलनागेन, द्वादशाक्षरावित्यनुवर्तमाने "आस्तारपङ्क्तिः परतः" इति P. 3. 40.

स्तीर्णाविति हेतौ, ततो हेतोरित्यर्थः । उदाहरणम्—

"अग्निं न स्ववृक्तिभिः" इति । SV. 1. 420; RV. 10. 21. 1.

**अथ यत्र पूर्वौ द्वादशाक्षरावुत्तरावष्टाक्षरौ सा प्रस्तारपङ्क्तिः । प्रस्तीर्णाविवैतौ पङ्क्तिपादाविति ।**

प्रस्तीर्णौ प्रथमतः स्तीर्णौ, गतमन्यत् । तदुक्तं पिङ्गलनागेन—

"प्रस्तारपङ्क्तिः पुरतः" इति । P. 3. 41.

उदाहरणम् ऋग्वेदे—

"भद्रमिन्द्रद्रा" इति । RV. 7. 96. 3.

अथ यत्र मध्येऽष्टाक्षरावभितो द्वादशाक्षरौ सा सꣳस्तारपङ्क्तिः, सꣳस्तीर्णाविवैतौ पङ्क्तिपादाविति ।

संस्तीर्णौ सम्यक् बहिःस्तीर्णौ विस्तृतौ । तथा च पिङ्गलनागः—

"संस्तारपङ्क्तिर्बहिः" इति । P. 3. 43.

स्पष्टम् । उदाहरणम् ऋग्वेदे—

"पितुभृतो न" इति । RV. 10. 172. 3.

अथ यत्र मध्ये द्वादशाक्षरावभितोऽष्टाक्षरौ सा विष्टारपङ्क्तिः, विष्टब्धाविवैतौ पङ्क्तिपादाविति ।

विष्टब्धौ विभातोऽन्तः स्कन्धाविव । गतमन्यत् । तदुक्तं पिङ्गलनागेन—

"विष्टारपङ्क्तिरन्तः" इति । P. 3. 42.

उदाहरणम्—

"अग्ने तव श्रवो वयः" इति । SV. 2. 1166; RV. 10. 140. 1.

अथ प्रगाथलक्षणमाह—

तद्यत्र सिद्धाविष्टारपङ्क्तिर्बृहत्या वा ककुभा वोत्तरा भवति तं प्रगाथ इत्याचक्षत इति ।

तदिति लुप्तविभक्तिकं पदम् । तत्पूर्वोक्तासु पङ्क्तिषु मध्ये यत्र सूक्ते सिद्धाविष्टारपङ्क्तिर्बृहत्या वा ककुभा वोत्तरा भवति तां सिद्धाविष्टारपङ्क्तिं प्रगाथ इत्याचक्षते मन्त्रदर्शिन इति । तदुक्तं शौनकेन—

"बार्हतो बृहतीपूर्वः ककुप्पूर्वस्तु काकुभः ।" इति । RPr. 18. 1.

सूत्रकारश्च—

"चतुःशतमैन्द्रा बार्हताः प्रगाथा दाशतयीषु" इति । Nid. p.82.18

उदाहरणम्—

"दुहान ऊधर्दिव्यम्" SV. 2. 26; RV. 9. 107. 5.

"यस्य ते पीत्वा" इति च । SV. 2. 43; RV. 9. 108. 2.

आनुष्टुभा अपि प्रगाथा भवन्तीत्येके । अनुष्टुप् प्रथमा, गायत्र्यावुत्तर इति ।

आनुष्टुभा अपि प्रगाथा भवन्तीत्येके आचार्याः । तदिदं लक्षणम्—अनुष्टुप् प्रथमा, गायत्र्यावुत्तरे इति । तथा च ब्राह्मणम्—

"त एतमनुष्टुप्शिरसं प्रगाथमपश्यन्" इति । PB. 9. 1. 1.

शौनकश्च—"अनुष्टुब्द्वे च गायत्र्यावेव आनुष्टुभः स्मृतः ।" इति । RPr. 18. 3.

अत्रोदाहरणं स्वयमेव दर्शयति । यथा—

"पुरोजिती वो अन्धसः" SV. 1. 545; 2. 47; RV. 9. 101. 1; PB. 8. 5. 7; 14. 5. 5.

"आ त्वा रथं यथोतये" SV. 1. 354; 2. 1121; RV. 8. 68. 1.

"विशोविशो वो अतिथिम्" SV. 1. 87; 2. 914; RV. 8. 74. 1.

"पान्तमा वो अन्धसः" इति । SV. 1. 155; 2. 63. RV. 8. 92. 1; PB. 9. 1. 6.

**अथाक्षरपङ्क्त्यो विंशत्यक्षराश्चतुष्पदाः पञ्चाक्षरपादा इति ।**

अथ चत्वारिंशदक्षराभ्यः पङ्क्तिभ्योऽन्या अक्षरपङ्क्तयः, तासामिदं लक्षणम्—विंशत्यक्षराश्चतुष्पदाः पञ्चाक्षरपादा इति । उदाहरणम्—

"पवस्व सोम महान्त्समुद्रः" इति । SV. 1. 429; 2. 591; RV. 9. 109. 4; PB. 14 11. 5.

**द्विपदामेनामेके प्रतिजानत इति ।**

एके आचार्या एनामक्षरपङ्क्तिं द्विपदां प्रतिजानते । दशाक्षरपादास्तर्हि ताः "समं स्यादश्रुतत्वात्" इति J. N. M. 10. 3. 13. 53.

न्यायात् समविभागस्योचितत्वात् । तथा च संहिताध्ययनम्—

"पवस्व सोम महान्त्समुद्रः" इत्यादिः । ibid.

**पञ्चविंशत्यक्षराऽपि भवति, पञ्चपदा पञ्चाक्षरपादेति ।**

पञ्चपदाप्यक्षरपङ्क्तिर्भवति, पञ्चविंशत्यक्षरा पञ्चाक्षरपादा । तथा ब्राह्मणकल्पौ "अष्टा(?अत्रा)क्षरपङ्क्तिषु ज्यैष्ठ्यकामायोक्थानि प्रणयेयुः" इति ब्राह्मणस्य कल्पः

"अग्ने तमद्याश्वं न स्तोमैः" इति । SV. 1. 434; 2. 1127; RV. 4. 10. 1.

साकमश्वमिति ।

**तां पदपङ्क्तिरित्याचक्षत इति ।**

तां पञ्चपदामक्षरपङ्क्तिं पदपङ्क्तिरित्याचक्षते ब्रह्मवादिन इति । तथा च पिङ्गलनागः, पञ्चक इत्यनु[वर्त]माने—

"पदपङ्क्तिः पञ्च ।" P. 3. 46.

"चतुष्कषट्कौ त्रयश्च ।" इति । P. 3. 47.

"अग्ने तमद्याश्वम्" SV. 1. 434; 2. 1127; RV. 4. 10. 1.

इत्यादौ त्रयः पादाः, चतुष्कषट्कौ द्वौ पादाविति तदुक्तलक्षणसङ्गतिः ।

इति निदानवृत्तौ छन्दोविचितिभाष्ये तृतीयः खण्डः

---

**चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, चतुष्पदैकादशाक्षरपादेति ।**

गतम् । यथा—

"प्र तु द्रव" इति । SV. 1. 523; 2. 27; RV. 9. 87. 1; PB. 11. 3. 1.

**अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षत इति ।**

यत्र त्रिष्टुभि उत्तमः पादोऽष्टाक्षरो भवति, अवशिष्टानि षट्त्रिंशदक्षराणि, तस्यो विभागाद् द्वादशाक्षरपादास्त्रय इति गम्यते, तामेवंरूपां ज्योतिष्मतीत्याचक्षते । अतएव शौनक आह—

"त्रयश्च द्वादशाक्षरा एकश्चाष्टाक्षरः क्वचित् ।
सैषा ज्योतिष्मती नाम ततो ज्योतिर्मतोऽष्टकः ॥" इति । RPr. 16. 70.

यथा—

"अग्निनेन्द्रेण" इति । RV. 8 35. 1.

**पञ्चपदाऽपि भवति, चत्वारोऽष्टाक्षरा एको द्वादशाक्षर इति ।**

पञ्चपदापि भवति त्रिष्टुप् । तस्याः पादानाह—चत्वार इति । अस्यास्त्रिष्टुभो महाबृहतीति संज्ञामाह शौनकः—

"चत्वारोऽष्टाक्षराः पादा एकश्च द्वादशाक्षरः ।
सा महाबृहती नाम ॥" RPr. 16. 71.

"यवमध्या तु मध्यमे ।" RPr. 16. 72.

इत्युद...मध्यमे भवतीनामेति (!) ।

**अष्टाचत्वारिंशदक्षरा जगती, चतुष्पदा द्वादशाक्षरपादैव ।**

स्पष्टम् । उदाहरणम्—

"अभि प्रियाणि पवते" इति । RV. 9. 97. 12.

**अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षत इति ।**

अथ यत्र जगत्यामुत्तमः पादोऽष्टाक्षरो भवति तां ज्योतिष्मतीं जगतीमाहुः । तथा च पिङ्गलः—

"एकेन त्रिष्टुब्ज्योतिष्मती" इति । P. 3. 50.

एकेनाष्टाक्षरपादेन युक्तायास्त्रिष्टुभो ज्योतिष्मतीत्वमभिधाय जगत्या अप्यष्टाक्षरपादयोगे ज्योतिष्मतीत्वमुक्तम्—

"तथा जगती ।" इति । P. 3. 51.

अत्रैकस्यैवोत्तमपादस्याष्टाक्षरतयावशिष्टे चत्वारिंशदक्षरेषु पादक्लृप्तिरूहनीया ।

**पञ्चपदाऽपि भवति, त्रयोऽष्टाक्षरा द्वौ द्वादशाक्षराविति ।**

पञ्चपदाऽपि भवति जगती । तस्याः पादानाह—त्रयोऽष्टाक्षरा द्वौ द्वादशाक्षराविति । इयं महासतोबृहतीति बह्वृचाः । तथा च सर्वानुक्रमणी—

"अष्टिनस्त्रयः स्त्वौ च द्वौ महासतोबृहती" इति । (SAn. p. 4. 14-15.)

उदाहरणम्—

**"आ यः पुप्रौ भानुना" इति ।** RV. 6. 48. 6.

**स एष समासः । आष्टपदतायाः प्रविक्रामतीति ।**

जगत्यां स एव समासः । न्यूनाक्षरत्रिलक्षणपादाविति शेषः । आष्टपदताया अष्टपदताम-भिव्याप्य क्रमते । एवंभूतायास्तस्या नामधेयमाह—

**सैषैवꣳ सती विष्टारपङ्क्तिः प्रवृद्धपदेति ।**

एवं सती आष्टपदा सती जगती विष्टारपङ्क्तिः प्रवृद्धपदेति नाम ।

**षट्पदाऽपि भवति, अष्टाक्षरपादा ।**

**"उभे यदिन्द्र रोदसी" इति ।** SV. 1. 379; 2. 440; RV. 10. 134. 1; PB. 13. 10. 3.

षट्पदाऽपि भवति जगती । अत्रोदाहरणम्—

**"उभे यदिन्द्र रोदसी" इति ।** ibid.

एतां महापङ्क्तिरित्याह शौनकः—

"महापङ्क्तिः षडष्टकः ॥" इति । RPr. 16. 75.

पथ्यान्येवात्र इति प्रतिज्ञातमर्थमुपसंहरति—

**एतानि खलु सप्त चतुरुत्तराणि छन्दाꣳसि व्याख्यातानीति ।**

सर्वेषामपि न्याय्यत्वे पथ्यत्वे च प्राप्ते आह—

**प्रथमं प्रथमं त्वेवात्र न्याय्यं पथ्यं विद्यात् ।**

अत्र चतुर्विंशत्यक्षरा गायत्रीत्यारभ्य

"उभे यदिन्द्र रोदसी" इति SV. 1. 379; 2. 440; RV. 10. 134. 1; PB. 13. 10. 3.

एवमन्ते सूत्रे उक्तेषु छन्दस्सु मध्ये प्रथमं प्रथममेवात्र छन्दो न्याय्यं न्यायादनपेतं पथ्यं पथि सर्वत्र यज्ञमार्गे प्रयोगार्हं विद्यात् । इतरत्तु यत्र वचनमस्ति तत्रैव प्रयोज्यमिति भावः । अथ द्विपदाच्छन्दो वक्तुमुपक्षिपति ।

[एतासामेव द्विपदा भवन्तीति ।]'

एतासामेव गायत्र्यादीनामन्यतमत् ।

**यत्र द्वावष्टाक्षरौ सा गायत्र्याः । यत्र द्वादशा[क्षराष्टा]क्षरौ सा विष्टारपङ्क्तेः । यत्रैकादशाक्षरौ सा त्रिष्टुभः । यत्र द्वादशाक्षरौ सा जगत्या इति ।**

यत्र क्वचिद् द्वावष्टाक्षरपादौ सा गायत्र्या द्विपदा, तस्या ऋचो द्विपदागायत्रीछन्द इत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । उदाहरणानि—

"एष ब्रह्मा य ऋत्वियः" SV. 1. 438; 2. 1118.

"विश्वतोदावन्" SV. 1. 437.

"उषा अप स्वसुष्टमः" SV. 1. 451; RV. 10. 172. 4.

"ब्रह्माण इन्द्रं महयन्तः" SV. 1. 439; RV. 5. 31. 4.

"प्र मे पतियानः" इति। *SMB. 1. 1. 8; GG 2. 1. 20.*

विषमपदाः

"शं पदम्" SV. 1. 441.

"प्र व इन्द्राय" SV. 1. 446.

"विश्वस्य" SV. 1. 450.

"इमा नु कम्" इति। SV. 1. 452; RV. 10. 157. 1.

"शं पदम्" SV. 1. 441.

इत्यादीनां चतसृणाम् ऋचां विषमपदाच्छन्दः । विषमं पदं यस्या सा विषमपदेति योगार्थानयमभिप्रेत्य तासां क्रमेण विषमपदां दर्शयति—

**नवाक्षरचतुर्दशाक्षरावेकादशाक्षरत्रयोदशाक्षरौ षोडशाक्षरदशाक्षरावेकादशाक्षराष्टाक्षराविति ।**

अष्टाक्षरपादयुक्तच्छन्दसां लक्षणमुक्त्वा दशाक्षरपादयुक्तस्य छन्दसो लक्षणमाह—

**दशाक्षरपादा विराज एकपदाप्रभृतयः आचतुष्पदाभ्य इति ।**

दशाक्षरः पादो यासां ता दशाक्षरपादाः, विराज एकपदाप्रभृतय आचतुष्पदाभ्यः, एकपदा विराट् तथा द्विपदा त्रिपदा चतुष्पदेति चतस्रो विराज इत्यर्थः । उदाहरणानि—

"सुमन्मा वस्वी रन्ती सूनरी ।" SV. 2. 1004.

"इन्दुः पविष्ट चारुर्मदाय" SV. 1. 431; RV. 9. 109. 13.

"पिबा सोममिन्द्र मन्दतु" SV. 1. 398; RV. 7. 22. 1.

"चर्क्रं यदस्य" इति । SV. 1. 331; RV 10. 73. 9.

**एकादशाक्षरपादा अपि त्रिपदा विराज इत्येवाचक्षते । यथा—**

"अग्निं नरः" इति । SV. 1. 72; 2. 723; RV. 7. 1. 1.

**यथा—**

**"अग्निं नरः" इति** । ibid.

दशाक्षरपादवदेकादश[ाक्षरपादा] अपि त्रिपदा विराजः । तथा च ब्राह्मणं स्वयमेवोदाहरणं दर्शयति । यथा—"अग्निं नरः" इति । तथा च ब्राह्मणम्—

"विराट्सु वामदेव्यमग्निष्टोमसाम भवति" इति । PB. 15. 12. 1.

द्विरुक्तिः पटलसमाप्त्यर्था ।

इति निदानवृत्तौ प्रथमः पटलः

---

चतुरुत्तराणां सप्तानां छन्दसां व्याख्यानानन्तरं छन्दसां विचयं व्याख्यास्याम इति प्रतिज्ञातार्थशेषं व्याख्यातुमादावतिच्छन्दसां व्याख्यानं प्रतिजानीते—

**ऊर्ध्वं जगत्या अतिच्छन्दस इति ।**

जगत्या अष्टाचत्वारिंशदक्षराया ऊर्ध्वमधिकमतिच्छन्दसोऽधिकाक्षरयुक्तानि छन्दांसि, ऋगभिप्रायं स्त्रीत्वम्, व्याख्यास्याम इति शेषः ।

**द्वापञ्चाशदक्षरप्रभृतय इति ।**

स्पष्टम् । ताः कतिविधाः किंपर्यन्ता इत्यत आह—

**चतुरुत्तरौ द्वौ सप्तवर्गौ, चतुर्दशताक्षराणां पराध्येति ।**

चत्वारि चत्वार्यक्षराण्युत्तराण्यधिकानि ययोस्तौ, सप्तानां वर्गस्सप्तवर्गस्तौ, चतुर्दश इति यावत्, चतुर्दशताक्षराणां छन्दसां पराध्यां पर्यन्तम् ।

**तासां नामधेयानीति—**

गतम् ।

**विधृतिः शक्वर्यष्टिरत्यष्टिरँहस्सरित्सम्पेति पूर्वस्य ।**

सप्तवर्गस्येति शेषः ।

**सिन्धुः सलिलमम्भो गगनमर्णव आपस्समुद्र इत्युत्तरस्येति ।**

सप्तवर्गस्येति शेषः । अत्रोदाहरणानि । द्विपञ्चाशदक्षरं विधृतिच्छन्दः । उदाहरणम्—

"प्र वो महे मतयः" SV. 1. 462; RV. 5. 87. 1.

षट्पञ्चाशदक्षरं शक्वरीच्छन्दः—

"प्रो ष्वस्मै पुरोरथम्" SV. 2. 1151; RV. 10. 133. 1.

षष्ट्यक्षरमष्टिच्छन्दः—

"साकं जातः क्रतुना" SV. 2. 837; RV. 2. 22. 3.

चतुःषष्ट्यक्षरमत्यष्टिः—

"अया रुचा हरिण्या" SV. 1. 463; 2. 940; RV. 9. 111. 1; PB. 16. 16. 8.

अष्टषष्ट्यक्षरमंहःछन्दः—

"अग्निँ होतारम्" SV. 1. 465; 2. 1163; RV. 1. 127. 1.

इयं बह्वृचानामत्यष्टिच्छन्दः । यथा कात्यायनः—"अत्यष्टिः" (SAn. 1. 127.)

"अग्निँ होतारम्" इति । ibid.

द्विसप्तत्यक्षरं सरिच्छन्दोऽवमंहः । षट्सप्तत्यक्षरं सम्पाच्छन्दः । स हि छन्दः, सुब्रह्मण्या निगदश्चोदाहरणम् । सिन्धुः सलिलमित्युत्तमवर्गस्योदाहरणं मृग्यम् । केचिदित्थमुदाहरन्ति— इलान्दस्य स्तोत्रीया सिन्धुच्छन्दउदाहरणम् । अत्र हि "अर्द्धर्चेष्वनुगानानि" (Nid. p. ) इति सूत्रेणैकैका स्तोत्रीयाऽशीत्यक्षरेषु गीयत इति । अत्र विधायकब्राह्मणे समुद्रं बाणतः छन्दःसलिलमिति समुद्रः सिन्धुपर्याय इति दृष्ट्वा चतुरशीत्यक्षरं सलिलं छन्दः । तस्योदाहरणमाह षड्गुरुशिष्यः—

"भगो अनुप्रयुङ्क्ताम्" AV. 12. 1. 40.

इत्यादि । अ(म्भ)च्छन्दउदाहरणम्—

"तच्चक्षुर्देवहितम्" RV. 7. 66. 16; VS. 36. 24.

इत्यादि । द्विनवत्यक्षरं गगनच्छन्दः, तस्य महानाम्नीषूदाहरणं प्रथमा स्तोत्रीया । षण्णवत्यक्षरमर्णवच्छन्दः, महानाम्नीष्वेव द्वितीयस्तोत्रीयोदाहरणम् । शताक्षरमापच्छन्दः

"देवो अग्निः स्विष्टकृद्देवान्यक्षद्यथायथम्" इति । VS. 21. 58; MS. 3. 11. 5.

चतुरुत्तरशताक्षरं समुद्रच्छन्दः । उदाहरणं महानाम्नीषु तृतीया ।

तान्येतानि सर्वाणि कृतच्छन्दाꣳसि भवन्तीति ।

कृतस्य छन्दांसि कृतच्छन्दाꣳसि । कृतो नाम यो द्यूतसमये प्र(सिद्ध)श्चतुरङ्कस्तद्वाचकेन तच्छन्दसा चतुष्कलं लक्ष्यते । तस्य छन्दांसि तत्प्रभृतीनि यावत् । तदुक्तं शौनकेन—

"चतुरक्षराच्चतुरुत्तरमुद्यन्ति" [ इति ] । RPr. 17. 19.

आचतुरक्षराच्चतुरक्षरं कृतिच्छन्द आरभ्य चतुरक्षरं चतुर उद्यन्ति यद् गच्छन्तीत्यर्थः । तत्र कृत्यादीनामेव संज्ञान्तरमभिहितं न तु संज्ञिभेद इति बोध्यम् । ननु चतुर्विंशतिप्रभृतीन्येकविंशतिच्छन्दांस्यभिहितानि, कथं चतुष्कलप्रभृतित्वमित्यत आह—

अथ प्राञ्चि गायत्र्याः पञ्च कृतच्छन्दाꣳसि—

कृतिश्चतुरक्षरा, प्रकृतिरष्टाक्षरा, संकृतिर्द्वादशाक्षरा, अभिकृतिः षोडशाक्षरा, उत्कृतिर्विꣳशत्यक्षरेति ।

ततश्च कृतिनामकस्य छन्दसोऽक्षरचतुष्करूपत्वात्तत्प्रभृतित्वं प्रकृत्यादेरिव गायत्र्यादीनामप्युपपन्नमिति भावः । उदाहरणानि—

एवा ह्येव SV. Maha. 10.

"इन्द्रो विश्वस्य राजति" SV. 1. 456.

इत्यादीनि यथादर्शनं योज्यानि ।

एतासामन्तरेष्वन्तस्थाछन्दाꣳसि । द्वाविꣳशत्यक्षरप्रभृतय इति ।

एतासां गायत्रीणामन्तरेषु मध्यदेशेषु द्वाविंशत्यक्षरादिष्वन्तस्था अन्तस्तिष्ठन्ति [ इति ] अन्तस्था राड्विराडित्यादयः । अत्रान्तरेष्वन्त इति

"वसुपते वसूनाम्" SV. 1. 317; RV. 10. 47. 1.

"गोपतिꣳ शूर गोनाम्" ibid.

इत्यत्रेवापौनरुक्त्यमिति परिहरणीयम् । छन्दांसि इति नपुंसकनिर्देशो नित्यनपुंसकत्वात् । एतदेव विविच्य दर्शयति—

द्वाविꣳशत्यक्षरप्रभृतयश्चतुरुत्तरास्त्रयः सप्तवर्गाः, द्विशताक्षराऽऽसां परार्घ्येति ।

स्पष्टम् ।

तासां नामधेयानि—

राट् सम्राट् विराट् [ स्वराट् ] स्ववशिनी परमेष्ठाऽन्तस्थेति पथ्यस्य ।

[प्रत्नं] चामृतं च वृषा च जीवं च तृप्तं च रसं च शुक्रमित्युत्तरस्य ।

अर्णश्चाम्भश्चाम्बु च वार्याप उदकमित्युत्तमस्येति ।

स्पष्टम् ।

**तान्येतानि सर्वाणि द्वापरच्छन्दांऽसि भवन्तीति ।**

द्वापरो नाम यो द्यूतसमये प्रसिद्धो द्व्यङ्कः । यदाहुः—द्वाविंशतीन्येतानि छन्दांसि, तत्कथं द्विकप्रभृतित्वमित्यत आह—

**अथ प्राश्चि द्वाविंऽशत्यक्षरतायाः पञ्चान्तस्थाछन्दांऽसि द्व्यक्षरप्रभृतीनि चतुरुत्तराण्यारोहीणि । हर्पिका शर्पिका सर्पिका [सर्वमात्रा] विराट्कामेतीति ।**

गतम् । ततश्च द्वापरच्छन्दोरूपद्विकप्रभृतित्वमुपपद्यत इति भावः । द्वापरच्छन्दसामुदाहरणं यथादर्शनं योज्यम् ।

निदानवृत्तौ द्वितीयपटले प्रथमः खण्डः

---

**अथ निचृद्भुरिजः । या एकेनाक्षरेणोनास्ता निचृतः । अथ [या] एकेन ज्यायस्यस्ता भुरिजः [इति] ।**

व्याख्यास्याम इति [ शेषः ] । गायत्र्यादिषु या ऋच एकेनाक्षरेणोनास्ता निचृतः । उदाहरणम्—

"तत्सवितुर्वरेण्यम्" इति SV. 2. 812; RV. 3. 62. 10.

सुगायत्री । अथ या ऋच एकेनाक्षरेण ज्यायस्य अधिकास्ता भुरिजः ।

"सदा व इन्द्रश्चर्कृषदा" इति SV. 1. 196.

भुरिग्गायत्री ।

**तान्येतानि सर्वाणि त्रेताकलिच्छन्दांऽसि भवन्ति इति ।**

तान्येतानि सर्वाणि निचृतो भुरिजश्च क्रमेण·········

·········वचनेन अन्येन ज्ञानं छन्दोविशेषं ज्ञानं नास्तीति विद्यात् ।

**अथ देवासुरच्छन्दांऽसीति ।**

व्याख्यास्याम इति शेषः ।

**एकाक्षरप्रभृतीन्येकोत्तराण्यारोहीणि देवच्छन्दांऽसीति ।**

आरोहीणि गायत्र्यादीनि जगत्यन्तान्येकोत्तराणि देवानां तान्येवैकाक्षराणीति । स्पष्टमन्यत् । पूर्वं पूर्वं छन्दोत्तरोत्तराणि छन्दांस्यारोहन्तीत्यारोहीणि । तथा च शौनकः—

"दैवान्यपि च सप्तैव ।" इति । RPr. 16. 3.

एवं सति जगत्यादेरक्षरपरिमाणं दर्शयति—

**सप्ताक्षरा जगत्यष्टाक्षराऽतिच्छन्दा इति ।**

स्पष्टम् । देवच्छन्दांस्यभिधायासुरच्छन्दांस्याह—

**पञ्चदशाक्षरप्रभृतीन्येकाक्षाणि प्रत्यवरोहीण्यसुरच्छन्दांꣳसीति ।**

एकमक्षरमवाक्प्रातिलोम्येनावतीत्येकावाणि, अतएव प्रत्यवरोहीणि, पञ्चदशाक्षरा गायत्री चतुर्दशाक्षरोष्णिगित्येवं प्रत्यवरोहन्तीति प्रत्यवरोहीणि । गतमन्यत् । तथा च शौनकः—

"सप्त चैवासुराण्यपि ।" इति । RPr. 16. 4.

"एकावनान्यसुराणां ततः पञ्चदशाक्षरात् ।" इति । RPr. 16. 6.

एवं सति जगत्यादेरक्षरपरिमाणं दर्शयति—

**नवाक्षरा जगत्यष्टाक्षरैवातिच्छन्दा इति ।**

स्पष्टम् ।

**अथ प्रजापतेश्छन्दांꣳसि, अष्टाक्षरप्रभृतीनि चतुरुत्तराण्यारोहीणि । द्वात्रिꣳशदक्षरा जगती । षट्त्रिꣳशदक्षराऽतिच्छन्दा इति ।**

स्पष्टम् । अत्र शौनकः—

"गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापतेः ।
पङ्क्तिस्त्रिष्टुब् जगती च सप्त छन्दांसि तानि वै ।
अष्टाक्षरप्रभृतीनि ॥" RPr. 16.1.

"चतुर्भ्यः परस्परम् ।" इति । RPr. 16. 2.

अथ ऋषिच्छन्दांस्याह—

**तेषां त्रयं त्रयꣳ समेत्यैकैकमृषिच्छन्दो भवतीति ।**

तेषां देवासुरप्रजापतिच्छन्दसां त्रयं समेत्य समानजातीयमेकीभूय, एकैकमृषीणां छन्दो भवति । ततश्च दैवी गायत्र्येकाक्षरा, असुरगायत्री पञ्चदशाक्षरा, प्रजापतिगायत्र्यष्टाक्षरा, तासां मेलने चतुर्विंशत्यक्षरा गायत्री त्रिपदाष्टाक्षरपादा भवति । एवमुष्णिगाद्यतिच्छन्दःपर्यन्तेषु द्रष्टव्यान्यृषिच्छन्दांसि । "गायत्री चतुर्विंशत्यक्षरा च" इति (cp. RPr. 16.16) शौनकोक्तेः । तत्रोपष्टम्भकमाह—

**[तदेष श्लोकः—]**

**कास्वित् स्त्रियो द्व्यक्षरमेकविꣳशतिस्सप्त (?) भूत्वानुभवन्ति कर्मभिः । पञ्चाशतः पञ्च नपुंसकानां द्वे चाधिके विंशति त्र्यक्षराणाम् ॥ इति ।**

तत्तद्ब्रह्मवादिभिरुदाहृतः श्लोकः प्रमाणमिति शेषः । कास्वित् स्त्रियः स्त्रीलिङ्गा गायत्र्यादिशब्दवाच्या एकविंशतिसङ्ख्या देवासुरप्रजापतिगायत्र्यादयः कर्मभिर्हेतुभिः कर्मानुष्ठानायेति यावत्, सप्त भूत्वानुभवन्ति, अक्षरमिति जात्येकवचनम्, अक्षराणि प्राप्नुवन्तीत्यर्थः । भवतेः प्राप्तौ परस्मैपदं छान्दसम् । कत्यक्षराण्यनुभवन्तीति । अत आह—नपुंसकानां नपुंसकशब्दवाच्यानामक्षराणां पञ्चाशतः पञ्चाशदुत्तरं द्विशतं द्वे चाक्षरेऽधिके द्विशतं पञ्चाशतं च

